शुक्लयजुर्वेदीय सविधि

# ॐ रुद्राष्टाध्यायी

(पृष्ठ संख्या २१२)

—सम्पादक—

याज्ञिक सम्राट, वेदाचार्य

पंडित श्री वेणीराम शर्मा गौड, वाराणसी

※ प्रकाशक ※

## नाथ पुस्तक भण्डार

१६४-दरीबा कलां, देहली-११०००६ ।

परिवर्धित संस्करण
सम्वत् २०४७

मूल्य :32-00 रुपये

# रुद्राष्टाध्यायी की विषय सूची

याज्ञिक सम्राट, वेदाचार्य

# पं० श्री वेणीराम जी शर्मा, गौड

वेद विभागाध्यक्ष
गोयनका संस्कृत कालेज,
वाराणसी



# दो शब्द

दिल्ली निवासी श्रीयुत केदार नाथ जी "नाथ पुस्तक भण्डार" संस्कृत और हिन्दी के श्रेष्ठ ग्रन्थों के प्रकाशक हैं। अब आप मेरे सम्पादकत्व में शुक्लयजुर्वेदीय रुद्राष्टाध्यायी का प्रकाशन कर वेद प्रेमियों का महान कल्याण कर रहे हैं।

मैं इस महान् श्रेष्ठ कार्य के लिए श्रीमान् केदार नाथ जी को हार्दिक धन्यवाद देता हूं और आशा करता हूं कि भविष्य में भी इसी प्रकार वेद ग्रन्थों का प्रकाशन करते रहेंगे।

**वेणीराम गौड**

वेद विभागाध्यक्ष

गोयनका संस्कृत कालेज, वाराणसी

ता: १७-१२-१९७५

# शिव पूजन की सामाग्री

रोली १५ पैसा
मौली १५ पैसा
धूपबत्ती ५० पैसा
केशर १०० पैसा
कपूर ५० पैसा
रुई १२ पैसा
चावल ५० ग्राम
अबीर (गुलाल) १५ पैसा
बुक्का (अभ्रक) १५ पैसा
सिन्दूर २५ पैसा
पान २०
सुपारी २५

ऋतुफल १ दर्जन
नारियल २
इत्र शीशी १
वरण-सामग्री ११
कुशासन ११
पञ्चपात्र १
आचमनी १
रुद्राक्षमाला १
गोबर
गोमूत्र
थाली १
कटोरी १

पुष्पमाला १५
बिल्वपत्र २५ पैसा
दूर्वा १५ पैसा
गङ्गाजल (अभिषेकार्थं)
इलायची ५० पैसा
लवङ्ग ५० पैसा
दुग्ध ५०० ग्राम
दधि २५० ग्राम
घृत १०० ग्राम
शहद १०० ग्राम
चीनी २०० ग्राम
कुशा

शिवजी के लिये १ धोती
शिवजी के लिये १ अंगोछा
अभिषेकपात्र १
मिट्टी के सकोरे ११
ब्राह्मणों के लिये मिठाई
ब्राह्मणों के लिये दक्षिणा
तुलसी १५ पैसे
चन्दन
यज्ञोपवीत १५
धतूरे के फूल २
नैवेद्य (पेड़ा) ५०० ग्राम

|| श्रीः ||

# श्रीशुक्लयजुर्वेदीयरुद्राष्टाध्यायी

## * प्रारभ्यते *

श्रीविश्वेश्वराय नमः ॥ तत्रादौ यजमानः अनुष्ठानात्पूर्वस्मिन्दिने अनुष्ठानोपयुक्तान्संभारानानीय हविष्याशी ब्रह्मचारी ब्राह्मणानाहूय शरीरशुध्यर्थं सर्वप्रायश्चित्तं कुर्यात् । तदभावे तद्दिने एव ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति पठित्वा पूजोपकरणं आत्मानं च प्रोक्षेत् ।

ततस्त्रिकुशपवित्रधारणम् । ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वः प्रसवउत्पु-नाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्य-यत्कामःपुनेतच्छकेयम् । इति पवित्रे धृत्वा पुण्डरीकाक्षः पुनातु इति त्रिरुच्चार्य सेकं कृत्वा विष्णवे नमः ३ इत्याचम्य शिखां बध्वा सपत्नी-कः अपत्नीको वा हस्ते ऽक्षतपुष्पाणिगृहीत्वा गणपतिं ध्यात्वा स्वस्तिवाचनं कुर्यात् ।

ॐ आनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे॥ १ ॥ देवानां-म्भद्रासुमतिर्ऋजूयतान्देवानांᳬरातिरभिनोनिवर्तताम् ॥ देवानांᳬस-ख्य मुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानि-

विदाह्मूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् ॥ अर्य्यमणंव्वरुणᳬसोम-
मश्विनासरस्वतीनᳬसुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभे-
षजन्तन्मातापृथिवीतात्पिताद्यौः ॥ तद्ग्रावाणᳬसोमसुतोमयोभुवस्तद-
श्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धिय-
ञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धᳬ
स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाᳬस्वस्तिनः पूषाव्विश्ववेदाᳬ ॥
स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिᳬस्वस्तिनोवृहस्पतिर्द्दधातु ॥ ६ ॥ पृषदश्वा-
मरुतᳬ पृश्निमातरᳬशुभंय्यावानोविदथेषुजग्मयᳬ ॥ अग्निजिह्वामनवᳬ
सूरचक्षसोव्विश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिᳬश्रृणुयाम-

देवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥९॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपञ्चजनाअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ १० ॥ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वꣳशान्तिःशान्तिरेवशान्तिः सामाशान्तिरेधि ॥ ११ ॥ यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ १२ ॥ गणानान्त्वागणपतिꣳहव-

वामहेप्रियाणान्त्वा प्रियपतिंठहवामहेनिधीनान्त्वानिधिपतिंठहवामहेव्वसो-
मम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ १३ ॥ अम्बेऽअम्बिके
म्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनी-
म् ॥१४॥ सुशान्तिर्भवतु । श्रीमन्महागणाधिपतये नमः । ॐ लक्ष्मीना-
रायणाभ्यांनमः । ॐ उमामहेश्वराभ्यांनमः । ॐ वाणीहिरण्यगर्भाभ्यां
नमः । ॐ शचीपुरन्दराभ्यांनमः । ॐ मातृपितृचरणकमलेभ्यो नमः ।
ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो
नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्वे-
भ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः । सिद्धिबुद्धिसाहिताय
श्रीमन्महागणाधिपतये नमः । इति १४ चतुर्दशनमस्कारान्कृत्वा । सुमुख-
श्चैकदन्तश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो

विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारम्भे बिवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनन्ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमङ्गलमाङ्गल्येशिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाम मंगलम् ॥ येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥७॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥८॥ लाभस्तेषाञ्जयस्तेषाङ्कुतस्तेषाम्पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ६ ॥ यत्र

योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवानी-
तिर्मतिर्मम ॥१०॥ अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥ तेषां
नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ११ ॥ स्मृते सकलकल्याण-
भाजनं यत्र जायते ॥ पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥१२॥
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशंतु नः सिद्धिं ब्रह्मेशा-
नजनार्दनाः ॥ १३ ॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् ॥
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥१४॥ हस्तेथान्यक्षत-
पुष्पाणि गौरीगणेशयोरुपरि समर्प्य सङ्कल्पं कुर्यात् ॥ ॐ तत्सदद्यैतस्य
ब्रह्मणोऽह्नि द्वितीयप्रहरार्धे श्रीश्वेतवाराहकल्पे जम्बूद्वीपे वैवस्वतमन्वन्तरे
अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे भारतखण्डे आर्या-
वर्तैकदेशान्तर्गतेऽमुकक्षेत्रे ( वाराणसीक्षेत्रे महाश्मशाने त्रिकंटकविरा-

जिते भागीरथ्याः पश्चिमे तीरे ) विक्रमशके बौद्धावतारे अमुकसंवत्सरे ऽमुकायनेऽमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे पुण्यपवित्रे मासे शुभे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थे चन्द्रे अमुकराशिस्थे सूर्ये अमुकराशिस्थे देवगुरौ शेषेषु ग्रहेषु यथायथा राशिस्थानास्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टे काले गोत्रः शर्माहं वा ( नामाहं ) ( सपत्नीकः ) श्रुतिस्मृतिपुराणोक्तपुण्यफलप्राप्त्यर्थं मम सकुटुम्बस्य ऐश्वर्याभिवृध्यर्थं अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिर कालसंरक्षणार्थं सकलमनईप्सितकामनासंसिध्यर्थंलोके वा राजसभायां तद्वारे वा सर्वत्र यशोविजयलाभादि प्राप्त्यर्थं पुत्रपौत्राद्यभिवृध्यर्थं च इह जन्मनिजन्मान्तरे वा सकलदुरितोपशमनार्थं तथा मम सभार्यस्य सपुत्रस्य सबान्धवस्य अखिलकुटुम्ब-

सहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयु-रारोग्यैश्वर्याभि वृध्यर्थं मम समस्त जन्मराशेरखिलकुटुम्बस्य चजन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमद्वादशस्थानास्थितक्रूरग्रहास्तैः संसूचितं संसूचयिष्यमाणं यत्सर्वारिष्टं तद्विनाशद्वारा एकादशस्थानस्थितवच्छु-भफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्नाभिवृध्यर्थं आदित्यादिनव-ग्रहानुकूलतासिध्यर्थं तथा इन्द्रादिदशादिक्पालप्रसन्नतासिध्यर्थं आधिदै-विकाधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्ष चतु-र्विधपुरुषार्थसिध्यर्थं सांबसदाशिवप्रीतिकामः अमुकलिंगोपरि यथोपचारैः पूजनपूर्वकं दुग्धधारया जलधारया च अमुकसंख्याकब्राह्मणद्वारा अमुकरुद्राभिषेकं कर्म करिष्ये ।

तत्राधिकारप्राप्त्यर्थं कायिकवाचिकमानासिकसांसार्गिकदोपोपशम-

नार्थं शरीरशुध्यर्थं च गोनिष्क्रयीभूतं द्रव्यं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृज्ये। सङ्कल्पिते कर्मणि निर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः पूजनं करिष्ये। ततः प्रतिमायां पूगफले ऽक्षतपुञ्जे वा गौरीगणेशपूजनम्। तत्र। हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज ॥ सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभपितुः पितः ॥ १ ॥ नागास्य नागहार त्वं गणनाथ चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां यागं च रक्ष मे॥ ३ ॥ ॐ गणानान्त्वेति गणपतेरावाहनम्। अम्बेऽअम्बिकेति गौर्या आवाहनम्। मंत्रौ कथितौ स्वस्तिवाचने। ॐ नमः शम्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच। ॐ साम्बसदाशिवाय नमः ध्यायामि आवाहयामि स्थापयामि

पूजयामि । मनोजूतिर्जुषतामज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञठं-
समिमन्दधातु ॥ विश्वेदेवासइहमादयन्तामों३॥ प्रतिष्ठ । साम्बसदाशि-
वाय नमः । साम्बसदाशिव सुप्रातिष्ठितो वरदो भव । अथवा गणपत्या-
द्यावाहितदेवताः सुप्रातिष्ठिताः वरदाः भवन्तु । अस्मिन्नभिषेके शिवस्यैव
मुख्यत्वात्तत्पूजनंलिख्यते । किं त्वेतैरेव मन्त्रैः सर्वेषां देवानां पूजनं
सर्वदा भवितुमर्हति । पादयोः पाद्यं समर्पयामि । हस्तयोरर्घ्यं समर्पयामि ।
अर्घ्यांगाचमनीयं स्नानीयं जलं समर्पयामि । ततः पञ्चामृतेन स्नानम् ।
ॐ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभ-
वत्सरित् ॥ पञ्चामृतं समर्पयामि सांबसदाशिवाय नमः । अथवा पृथक्
पृथक् पञ्चामृतेन स्नानं कार्यम् । तत्र क्रमः । पञ्चामृतं मयानीतं पयो

दधि घृतं मधु ॥ शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥

ॐ पयः पृथिव्याम्पयऽओषधीषु पयोदिव्यन्तारिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ १ ॥ पयस्नानं समर्पयामि । ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ २ ॥ दधिस्नानं समर्पयामि । घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतंवस्यधाम । अनुष्वधमावहमादयस्वस्वाहा कृतंवृषभवक्षि हव्यम् ॥ ३ ॥ घृतस्नानं समर्पयामि । मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ ४ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवठंरजः ॥ मधुद्यौरस्तुनः पिता ॥ ५ ॥ मधुमान्नोव्वनस्प-

तिम्मधुमाँ२अस्तुसूर्य॑ः ॥ माध्वीर्गावो भवन्तु नः ॥ ६ ॥ मधुस्नानं समर्पयामि । अपाᳬरसमुद्वयसᳬसूर्ये सन्तᳬसमाहितम् ॥ अपाᳬरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ७ ॥ शर्करास्नानं समर्पयामि । श्रीसांबसदाशिवाय नमः । शुद्धोदकस्नानं सर्वत्र ।ततः । शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षो रुणास्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥ ८ ॥ शुद्धोदकस्नानं समर्पयामि सांब० । युवासुवासाः परिवीतऽआगात्स उश्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः । शीतवातोष्णसंत्राणं लज्जाया रक्षणम्परम् ॥ देहालङ्करणं वस्त्रमतः शान्तिम्प्रयच्छमे ।

वस्त्रं स० । श्रीसांब० । यज्ञोपवीतम्परमपवित्रं प्रजापतेर्यत्सहजम्पुरस्तात् ।
आयुष्यमग्र्यम्प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तुतेजः । यज्ञोपवीतमासियज्ञस्यत्वायज्ञोपवीतेनोपनह्यामि । नवभिस्तन्तुभिर्युक्तन्त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ।। यज्ञोपवीतं समर्पयामि । श्रीसांब०
सुजातोज्ज्योतिषासहशर्म्मव्वरूथमासदत्स्वः ।। व्वासोऽ अग्नेव्विश्वरूपᳪंसंव्ययस्वव्विभावसो उपवस्त्रं समर्पयामि । श्रीसांब० । त्वाङ्गन्धर्व्वाऽअखनंस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ।। त्वामोषधेसोमोराजाव्विद्वान्यक्ष्मादमुच्यत ।। श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् । चन्दनानुलेपनं समर्पयामि ।
श्रीसांब० । महादेवप्रजने त्वत्र भस्म समर्पणीयम् ।। प्रसद्यभस्मनायोनि-

मपश्चंपृथिवींमग्ने । सठं०सृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ भस्म समर्पयामि । श्रीसांब० । अक्षन्नमीमदन्तह्यवप्रिया अधूषत । अस्तोष-तस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ अक्षताश्च सुरश्रेष्ठाः कुङ्कुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर । अक्षतान्समर्पयामि । श्रीसांब० । ओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसू-वरीः।अश्वाइवसजित्वरी र्वीरुधः पारयिष्ण्वः ॥माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥ पुष्प मालां समर्पयामि । श्रीसांब० । नमोबिल्मिनेचकवचिनेचनमोवर्म्मिणे चवरूथिनेचनमः श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्याय च ।

बिल्वपत्रं विल्वफलं धत्तूरं मातुलानीं च समर्पयामि महादेवे। गणेशेतु। काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि। एवानोदूर्वेप्रतनुसहस्रेणशतेन च। दूर्वाङ्कुरान्सुहरितानमृतान्मङ्गलप्रदान्। आनीतांस्तु च पूजार्थं गृहाण गणनायक। दूर्वाङ्कुरान्समर्पयामि। गणेशाम्बिकाभ्यांनमः। अहिरिवभोगैःपर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः॥ हस्तघ्नोविश्वा-व्वयुनानिव्विद्वान्पुमान्पुमांसम्परिपातुव्विश्वतः॥ नानापरिमलैर्द्र-व्यैर्न्निर्मितं चूर्णमुत्तमम्। अवीरनामकं चूर्णं गन्धं चारु प्रगृह्यताम्। नानापरिमलद्रव्याणि समर्पयामि। श्रीसांब०। त्र्यंबकंय्यजामहेसुग-न्धिम्पुष्टिवर्धनम्। उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्॥ त्र्यं-म्बकंयजामहेसुगन्धिम्पतिवेदनम्। उर्व्वारुकमिवबन्धनादितोमुक्षीयमा-

मुतं÷। सुगन्धिद्रव्याणि समर्पयामि। श्रीसांब०। नैवेद्यं पुरतः स्थाप्य। ॐ धूरसि धूर्व्व धूर्व्वन्तं धूर्व्व तं योऽस्मान्धूर्व्वति तं धूर्व्व यं व्वयं धूर्व्वामः ॥ देवानामसि व्वन्हितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्धउत्तमः ॥ आघ्रेयः सर्वदेवानान्धूपोयम्प्रतिगृह्यताम् ॥ धूपमाघ्रापयामि। श्रीसांब०। ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा। अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्योतिर्व्वर्च्चः स्वाहा। ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥ साज्यं च वर्तिसंयुक्तं वन्हिना योजितं मया ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ॥ त्राहि मां निरयाद्घोराद्दीपज्योतिर्न्नमोस्तुते ॥ दीपं दर्शयामि

श्रीसांब० हस्तौ प्रक्षाल्य। ॐ अन्नपतेऽन्नस्यनोदेह्यनमीवस्यंशुष्मिणः। प्रप्रदातारन्तारिषऊर्ज्जंनोधेहिद्विपदे चतुष्पदे ॥ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु। ईप्सितम्मे वरं देहि परत्र च परां गतिम्। शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ॥ आहारो भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम्। नैवेद्यं निवेदयामि। श्रीसांब०। नैवेद्ये बिल्वपत्रं प्रक्षिप्य। ॐ प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा। आचमनीयं स०। मध्ये पानीयं स०। उत्तरापोशनं स० श्रीसांब०। अꣳशुनातेऽअꣳशुःपृच्यतामपरुषापरुः। गन्धस्तेसोममवतुमदायरसोऽअच्युतः ॥ चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम् ॥ करोद्वर्तनकं देव गृहाण परमेश्वर। करोद्वर्त-

नार्थे चन्दनानुलेपनं समर्पयामि । श्रीसांब० । याःफलिनीर्याऽअफ-
लाऽअपुष्पायाश्च पुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वठंहसः ॥ पू-
गंफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं तांबूलं प्रति-
गृह्यताम् । मुखशुद्धयर्थं ताम्बूलपत्रं पूगफलं समर्पयामि । श्रीसांब० ।
अनेनैव याः फलिनीः इतिमन्त्रेण । इदं फलम्मया देव स्थापितम्पुर-
तस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि । नारिकेलतुफला-
दीन्समर्पयामि । श्रीसांब० । हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपति-
रेकऽआसीत् । सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ हि-
रण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं
प्रयच्छ मे । कृतायाः पूजायाः साद्गुण्यार्थे दक्षिणाद्रव्यं समर्पयामि ।

श्रीसांब० । इदᳬंहविः प्रजननम्मेऽअस्तुदशवीरᳬंसर्व्वगणᳬंस्वस्तये । आत्मसनिप्रजासनिपशुसनिलोकसन्यभयसनि । अग्निःप्रजाम्बहुलाम्मे-करोत्वन्नम्पयोरेतोऽअस्मासुधत्त । कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारं सदा वसन्तं हृदयारविंदे भवं भवानीसहितं नमामि ॥ कर्पूरार्तिकं समर्पयामि । श्रीसांब० । मंत्रपुष्पाञ्जलिं गृहीत्वा । ॐ यज्ञेन-यज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् । तेहनाकम्महिमानः सच-न्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः । ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय वैश्रवणाया महाराजाय नमः ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं

समन्तपर्यायी स्यात्सार्वभौमः सार्वायुषऽआन्तादापरार्धात्पृथिव्यै समुद्र-पर्यन्तायाऽएकराडिति । तदप्येषश्लोकोभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति । ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् । सम्बाहु-भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देव एकः ॥ मन्त्रपुष्पाञ्जलिं सम-र्पयामि । श्रीसांब० । अथवैकेनमंत्रेण । येतीर्थानिप्रचरन्तिसृकाहस्तानिषंगिणः । तेषांᳬसहस्रयोजनेवधन्वानितन्मासि ॥ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिण-पदेपदे । प्रदक्षिणां सम० । एभिरेव मंत्रैः गणेशाम्बिकयोः पूजनम् । तथाचान्येषां देवानां पूजनं भवति । गणेशपूजायां विशेषः । जलग-

न्धाक्षतपुष्पैः फलदूर्वादक्षिणाभिश्च विशेषार्घं दद्यात् । रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयंकर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ॥ वरदस्त्वं वरं देहि वांछितं वांछितार्थद ॥ २ ॥ अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ विशेषार्घं समर्पयामि । गणेशाम्बिकाभ्यान्नमः । ततः प्रार्थना । विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय

देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लम्बोदर नमस्तुभ्यं सततं मोदक-प्रिय ॥ निर्विघ्नङ्कुरु मे देव सर्वकार्येषु सर्वदा ॥ ५ ॥ त्वां विघ्न-शत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति फलप्रदेति ॥ विद्याप्र-देत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥ ६ ॥ अनया पूजया सगणपतिसाम्बसदाशिवः प्रीयताम् । अस्मिन्गणपति-सहितसाम्बसदाशिवपूजनविधौ यन्न्यूनातिरिक्तं कर्म तत्सर्वं महादेव-प्रसादात्परिपूर्णमस्तु । इति गणेशादिपूजनम् ।

गौरीगणेशपूजनोत्तरं साधारणे रुद्राभिषेके ब्राह्मणानां वरणङ्का-र्यम् । ततः आदौ विप्रपादप्रक्षालनम् । त्वाङ्गन्धर्व्वेति तिलककरणम् । अक्षन्नमीमदन्तेत्यक्षतान् । श्रीश्चते० पुष्पमालां शिरसि दद्यात् । ततो-वरणसामग्रीङ्गृहीत्वाऽभावे मूल्यमादाय सङ्कल्पं कुर्यात् । देशकालौ

संकीर्त्य गोत्रः शर्मा ( नाम ) अहं सङ्कल्पिते रुद्राभिषेककर्मणि ( वा महारुद्रे अतिरुद्रे कर्मणि ) एभिर्वरणद्रव्यैः ( जपकरणार्थं, पाठकरणार्थं, अभिषेकहोमकरणार्थं वा ) गोत्रं शर्म्माणं ब्राह्मणं त्वाम् वृणे । अथवा । गोत्रान्नानाशर्म्मब्राह्मणान् युष्मान् वृणे । वृतोस्मीति प्रतिवचनम् । वा वृतास्मः । ततो रक्तसूत्रस्य हस्ते वेष्टनम् । यदाबध्नन्दाक्षायणाहिरण्यꣳ शतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् । येन बद्धो बली राजा दानवेन्द्रो महाबलः ॥ तेन त्वां प्रतिबध्नामि रक्षे मा चल माचल ॥ अनेन रक्षाबन्धनम् । वा । व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ वरणग्रहणं कृत्वा महादेवलिङ्गो-

परि सच्छिद्रङ्कलशं यथा सततं धारा पतेत् तथा रज्वादिभिर्बध्वा चतुष्पादिकोपरि पात्रं धृत्वा वा तस्मिञ्जलं दुग्धं शर्करादि च प्रक्षिप्य विशिष्टं ध्यानं कुर्यात् । तद्यथा । अथाभिषेके जपे च ध्यानम् । शुद्धस्फटिकसंकाशन्त्रिनेत्रम्पञ्चवक्त्रकम् ॥ गङ्गाधरन्दशभुजं सर्वाभरणभूषितम् ॥१॥ नीलग्रीवं शशाङ्काङ्कन्नागयज्ञोपवीतिनम् ॥ व्याघ्रचर्मोत्तरीयञ्च वरेण्यमभयप्रदम् ॥ २ ॥ कमण्डल्वक्षसूत्राभ्यामान्वितं शूलपाणिनम् ॥ ज्वलन्तम्पिङ्गलजटाजूटमुद्योतकारिणम् ॥ ३ ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनन्दिव्यभोगसमान्वितम् ॥ ४ ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ॥ नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ ५ ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ॥ एवन्ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥ ६ ॥

प्रसंगतः अभिषेकात्मकस्नपनद्रव्य लिख्यते । जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः ॥ १ ॥ दध्ना च पशुकामाय श्रिया इक्षुरसेन च ॥ मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा ॥ २ ॥ पुत्रार्थी पुत्रमाप्नोति पयसां चाभिषेचनात् ॥ वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याङ्गना ॥३॥ सद्यः पुत्रमवाप्नोति पयसां चाभिषेचनात् ॥ अन्यच्च । ज्वरप्रकोपशान्त्यर्थं जलधारा शिवप्रिया ॥४॥ घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम् । तदा वंशस्य विस्तारो जायते नात्र संशयः ॥५॥ प्रमेहरोगशान्त्यर्थं प्राप्नुयान्मानसेप्सितम् ॥ केवलं दुग्धधारा च तदा कार्या विशेषतः ॥ ६ ॥ शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत् ॥ श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शङ्करस्य च ॥ ७ ॥ सार्षपेणैव तैलेन शत्रुनाशो भवेदिह ॥ मधुना यक्ष्मराजोऽपि गच्छेद्वै शिवपूजनात् ॥ ८ ॥

पापक्षयार्थी मधुना निर्व्याधिः सर्पिषा तथा ॥ जीवनार्थी तु पयसा श्रीकामीक्षुरसेन वै ॥ ६ ॥ पुत्रार्थी शर्करायास्तु रसेनार्च्चेच्छिवं तथा ॥ महालिङ्गाभिषेकेण सुप्रीतः शङ्करो मुदा ॥ १० ॥

कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितम् । अन्यच्च । यजुर्मयोह्ययं देवो यजुर्भिः शतरुद्रियैः ॥ पूजनीयो महारुद्रः संततिश्रेयइच्छता ॥ ११ ॥ अतो यजुर्वेदस्थस्यैव रुद्रस्यातिप्राशस्त्यम् । अस्मिन्समये केचिच्छृंगेण धारांदत्वा रुद्रीं पठित्वा शिवप्रीत्यर्थमभिषेकं कुर्वन्ति । तत्र प्रमाणम् । शिवं गवयशृ-ङ्गेण केशवं शंखवारिणा । विघ्नेशं ताम्रपात्रेण स्वर्णेन जगदम्बिकाम् ॥ १ ॥ औपासनं यदि कृतं हयमेधतुल्यं वासस्त्रिरात्रमिह गाङ्गतटेऽत्रिकल्पः ॥ एकेन शृङ्गसलिलेन कृताभिषेको मध्वाज्यदुग्धघटकोटिमितेन तुल्यः ॥ २ ॥ इति रुद्रयामले । वैदिकपौराणिक मन्त्राज्ञाने ॐ नमोभगवते रुद्राय

इति मंत्रेण यथोपचारेण पूजनं शिवस्य करणीयम् । गणानान्त्वेत्या-
रभ्य तच्चक्षुःपर्यन्तपाठेन षडङ्गरुद्रीति संज्ञा भवति ( रुद्रः ) एकादश-
रुद्राध्यायेन वाजश्चेति प्रत्यनुवाकेन रुद्रैकादशिनी संज्ञा भवतिं । रुद्रै-
कादशिनीभिरेकांदशैः पाठैः लघुरुद्रइति संज्ञा । एकादशलघु रुद्रैः
महारुद्रइाति संज्ञा । एकादशमहारुद्रैः श्रातिरुद्र इति संज्ञा ।

तत्र रुद्राध्यायेन सह वाजश्चेति प्रत्यनुवाकः पठनीयः । तत्र प्रमाणम् ।
वेदवेदाब्धिरामाश्च रामरामद्विकैकंकाः ॥ द्वौ द्वौ मंत्रौ तथैवोक्तौ नमके
चमकस्य तु ॥ प्रथमे व्वाजश्चेति चतस्रः ४ । द्वितीयपाठे सत्यश्चेति
चतस्रः ४ । तृतीय ऊ र्क्चेति चतस्रः ४ । चतुर्थेऽश्माचेति तिस्रः ३ ।
पञ्चमेऽग्निश्चेति तिस्रः ३ । षष्ठेऽठंशुश्चेति तिस्रः । सप्तमेऽग्निश्चेति द्वे २ ।
अष्टम एकाचेत्येका १ । नवमे चतस्रश्चेत्येका १ । दशमे त्र्यविश्चेति द्वे

२ । एकादशे व्वाजायस्वाहेति द्वे २ । एवं पूर्वोक्तरुद्ररुद्रैकादाशिनी लघुरुद्रमहारुद्रातिरुद्रेषु प्रमाणानि वक्ष्यन्ते । तत्र शातातपः । जपस्तु नमकाध्याय कतमेन समन्वितः ॥ स एवैकगुणोरुद्रः सर्वपापनिकृन्तनः ॥ १ ॥ रुद्राध्यायं सकृज्जप्त्वा चमकस्यानुवाककम् ॥ एकादशाभिरेतैस्तु रुद्रैकादाशिनी स्मृता ॥ २ ॥ एकादशभिरेताभिर्लघुरुद्रः प्रकीर्तितः ॥ लघुभीरुद्रसङ्ख्याकैर्महारुद्रः प्रकीर्तितः ॥ ३ ॥ एकादशमहारुद्रैरतिरुद्र इतीरितः ॥ एवम्पञ्चसु रुद्रेषु श्रेष्ठः स्यादुत्तरोत्तरः ॥ ४ ॥

अभिषेके हस्तेन स्वरो देयो न वेति । रुद्रजपस्तु स्वरपूर्वकं कार्यः । यज्ञकर्म्मण्यजपन्यूङ्खसामसु ।१।२।३४। इति पाणिनिः । यज्ञक्रियायान्तत्र एकश्रुतिस्स्याज्जपादीन्वर्जयित्वा । यज्ञकर्माणि सुब्रह्मण्यासाम जप न्यूंखयाजमानवर्जम् । इति कात्यायनः । अ० १ क० ८ सू० १६

एवमादिवर्जितानां मन्त्राणां एकश्रुत्या ( तानेन ) प्रयोगः । तान एकश्रुतिः । यज्ञकर्मण्यपि जपादिवर्जमेकश्रुतिविधानेन जपादिषु त्रैस्वर्यावगमात् । अन्यच्च । मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात् ॥ १ ॥ इति महाभाष्याच्च । अतो वैदिकमन्त्रमात्रजपे त्रैस्वर्यमेवेति ध्येयम् । स्वरप्रदर्शनं तु हस्तेनैव कार्यम् । हस्तेन ते । इति प्रातिशाख्यसूत्रात् । तथा च । हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ॥ ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ १ ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसामभिर्दग्धो वियोनिमाधिगच्छति ॥ २ ॥ इति पाणिनिनाऽभिहितत्वाच्च । तत्र विशेषः । सोन्नतं तु करं कृत्वा सुव्यक्ताङ्गुलिरञ्जितम् ॥ स्वरविच्च स्वरङ्कुर्यात्प्रादेशदेश-

गामिनम् ॥ अभिषेकादौ तु हस्तस्य व्यापृतत्वान्न हस्तेन स्वरप्रदर्शनङ्कार्यम् । एवं गायत्रीजपादावपि न हस्तेन स्वरप्रदर्शनम् । गणानायां हस्तस्य व्यापृतत्वात् । अतो येषां ब्राह्मणानां यजमानानां वा हस्तस्य व्यापृतत्वन्नास्ति तैरवश्यं हस्तेन स्वरो देयः । अतः स्वरेण पाठः कर्तव्यः । कथं स्वरो देय इति विचारे याज्ञवल्क्यः । उदात्तश्चानुदात्तश्च स्वरितश्च तथैवच । इमे स्वराः । प्रसन्नमानसो भूत्वा किञ्चिन्निम्नमधोमुखम् । प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्रीं चानुपूर्वेण ततो वेदान्समारभेत् ॥ इत्थमारम्भणीयम् ॥

अथ यजुर्वेदे शुक्ले स्वरप्रक्रिया कथ्यते । हृदि दक्षिणे अधश्चानुदात्तः । मूर्ध्नि वामे चोपर्युदात्तः । श्रुतिमूलात्पतितः स्वरितः । अनुदात्तात्स्वरिते परेऽनुदात्तः नीचैर्गामिष्याति । उदात्त उपरि गमिष्य-

ति। स्वरितस्तूर्ध्वंतः मध्ये पतिष्यति । अनुदात्तादनुदात्ते परे उदात्तो वामभागे गच्छत्यनुदात्तस्तु दक्षिणे । यत्रैवञ्चिन्हम् ६वा७तत्र हस्तन्युब्जीकरणङ्कर्तव्यम् । यत्रैवञ्चिन्हम् ४वा८तत्र स्वरो हृदि गत्वा बहिरागमिष्यति । दीर्घे ग्गुंठंकारे रङ्गे हाँ २॥ इत्यत्र तर्जन्याः प्रसारः परिकीर्तितः। ह्रस्वग्गुँकारे अङ्गुष्ठाकुञ्चनम् ७इति । यकारस्य पदादिस्थस्य संयुक्तस्य ऋकारेणयुक्तस्य आदिमध्यावसानस्थस्य द्वित्वस्य च चवर्गतृतीयजकारोच्चारणम् । वकारस्य संयुक्तस्यासंयुक्तस्य च द्वित्वोच्चारणम् । ऋकारस्य रकारस्य लकारस्य च एकारसहितोच्चारणम् । षकारस्यासंयुक्तस्य संयुक्तस्य च टवर्गं विहाय कवर्गद्वितीयखकारोच्चारणम् । अनुस्वारस्य उकारविशिष्टद्वित्वगकारोच्चारणं शषसहरेफेषु । ह्रस्वात्परे दीर्घः ग्गुं इति । दीर्घात्परे संयोगे परे च ह्रस्वः ग्गुँ इति ।

ह्रस्वात्परे दीर्घात्परे च क्रमेण विसर्गस्य स्थाने पूर्वस्वरसहितस्य हकारस्य प्रतीतिः। वर्गपञ्चमाक्षरात्परस्य विसर्गस्य सानुनासिकंहकारोच्चारणम्। विसर्गेष्वीषद्विरामः। विसर्गे तु यत्रः एवञ्चिन्हन्तत्राधोमध्ये दक्षिणे वा हस्तो गमिष्यति केवला कनिष्ठिकैव प्रक्षेप्तव्या तर्जनीमध्यमानामिकाना न्नामनम्। यत्रैवञ्चिन्हम्–÷तत्र मध्ये हस्तो याति कनिष्ठिकातर्जन्यौ प्रक्षेपणीयेमध्यमाऽनामिकयोर्नामनम्। तथैव यत्रैवम्ःचिन्हं भवति तत्र वामभाग उपरि च हस्तो गमिष्यति केवलैव तर्जनी प्रक्षेपणीया शेषाङ्गुलीनान्तिम्रृणान्नामनम्। ऋचोऽर्धऋगन्ते च स्वरस्य दीर्घोच्चारणं। हलःद्वित्वोच्चारणं सस्वरोच्चारणं च। म् कारे मुष्टिबन्धनम्। न् कारे अंगुष्ठतर्जनीनखस्पर्शनम्। क् ट् ङ् ण् कारे तर्जनीनामनम्। त् कारे अङ्गुष्ठतर्जनीभ्याङ्कुण्डलाकृतिः करणीया।

इति साधारणो याज्ञवल्क्यप्रणीतो नियमः विशेषमग्रे वक्ष्यामि।

अथ षडङ्गोऽङ्गन्यासः ॐ ॥

मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ॥ ॐ हृदयायनमः ॥ १ ॥ ॐ अबोध्यग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् । यह्वाऽइवप्प्रवयामुज्जिहानाः प्प्रभानवः सिस्रतेनाकम

च्छं ॥ ॐ शिरसे स्वाहा ॥ २ ॥ ॐ मूर्द्धानन्दि
वोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातम
ग्निम् ॥ कविंᳩ सम्म्राजमतिथिञ्जनानामासन्ना
पात्रञ्जनयन्तदेवाः ॥ ॐ शिखायै वषट् ॥ ३ ॥
ॐ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वा
राजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणास्तेकृ
णोतुजयन्तन्त्वानुदेवामदन्तु ॥ ॐ कवचाय

हुम् ॥ ४ ॥ ॐ व्विश्वतश्चक्षुरुत व्विश्वतोमुखो
व्विश्वतोबाहुरुतव्विश्वतस्प्पात् ॥ सम्बाहुभ्या
न्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ।
ॐ नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ मानस्तोकेत
नयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरि
षः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः
सदमित्त्वाहवामहे ॥ ॐ अस्त्राय फट् ॥ ६ ॥

(ध्यानम्) ध्यायेन्नित्यम्महेशं रजतगिरिनिभं
च्चारुचन्द्रावतंसं रत्नाकल्पोज्वलाङ्गम्परशुमृग
वराभीतिहस्तम्प्रसन्नम् ॥ पद्मासीनं समन्ता
त्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्व
वन्द्यंनिखिलभयहरम्पञ्चवक्त्रन्त्रिनेत्रम्॥ १॥
नमः पार्वतीपते हर ॥ ॐ ॥ गुणानान्त्वाग
णपतिꣳ हवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳ हवा

महेनिधीनान्त्वांनिधिपतिं हवामहेव्वसोमम। आहमंजानिगर्भधमात्त्वमंजासिगर्भधम् १। गायत्रीत्रिष्टुब्जगंत्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्यु ष्णिहाककुप्सूचीभिः शम्म्यन्तुत्त्वा ॥ २ ॥ द्विपदायाश्चतुष्पदास्त्रिपदायाश्चषट् पदाः ॥ विच्छन्दायाश्चसच्छन्दाः सूचीभिः शम्म्यन्तु त्वा ॥ ३ ॥ सहस्तोमाः सहछन्दसऽआवृतः

सुहष्प्र्मा॒ऽऋषयं॑सुप्तदैव्यां॒॥ पू॒र्व्वैषा॒म्पन्था

मनु॒दृश्यु॒धीरां॒ऽअन्वा॒लेभि॒रेर॒थ्यो॒नर॒श्म्मीन्

॥ ४ ॥ ॐ यज्जाग्र॑तो॒दू॒रमु॒दैति॒दैवु॒न्तदु॑सुप्त

स्य॒तथै॒वैति ॥ दू॒र॒ङ्ग॒मञ्ज्यो॑तिषा॒ञ्ज्योति॒रेकु॒

न्तन्न्मु॒मेमनं॑शि॒वसंङ्क॑ल्प्पमस्तु ॥ ५ ॥ येनु॒क

र्म्मा॑ण्य॒पसो॑मनी॒षिणो॑य॒ज्ञेकृ॒ण्वन्ति॒वि॒दथे॑षु

धीरां॑॥ यद॑पू॒र्व्वँय॒क्षमु॒न्तः॒प्र॒जानु॒न्तन्न्मु॒म

नः शिवसङ्कल्पमस्तु॥ ६॥ यत्प्रज्ञानमुतचेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनकर्म्मक्रियतेतन्मेमनः शिवसङ्कल्पमस्तु ॥७॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥ येनयज्ञस्तायतेसप्तहोतातन्मे मनः शिवसङ्कल्पमस्तु॥८॥ यस्मिन्नृचः सामयजूꣳषियस्मिन्प्रतिष्ठिता

रथनाभाविवारा॒ऽ ॥ यस्मिँश्चित्तꣳसर्वमोत

म्प्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥९॥

सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशु

भिर्व्वाजिनऽइव ॥ हृत्प्रतिष्ठंयदजिरञ्जविष्ठ

न्तन्मेमनः शिवसङ्कल्पमस्तु ॥ १० ॥

इति प्रथमोऽध्यायः॥१॥ॐ॥ सहस्रशी

र्षापुरुषꣳसहस्राक्षःसहस्रपात् ॥ सभूमिꣳस

वेतरप्पूत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽए
वेद६ सर्व्वुं रुयद् भूतंरुयच्च भाव्यम् ॥ उतामृतत्व
स्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्य
महिमातोज्यायांश्चपूरुषः ॥ पादोऽस्यविश्वाभू
तानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽ
उदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्व
ङ्व्यक्रामत्साशनानशनेऽअभि ४ ततोविराड

जायतविराजोऽअधिपूरुषः ॥ सजातोऽअत्य

रिच्यतपश्चाद्भूमिमथोपुरः ॥५॥ तस्माद्यज्ञा

त्सर्वहुतःसम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्रे

वायव्यानारण्याग्राम्म्याश्चये ॥ ६ ॥ तस्माद्य

ज्ञात्सर्वहुतऋचः सामानिजज्ञिरे ॥ छन्दाꣳ

सिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ॥ ७ ॥

तस्म्मादश्श्वाऽअजायन्तयेकेचोभयादतः ॥

गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः
॥ ८ ॥ तंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्र
तः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये
॥ ९ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्ये
ते ॥१०॥ ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्न्यः
कृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽ

ऽअजायत ॥११॥ चन्द्रमामनसोजातश्चक्षोः
सूर्योंऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमु
खादग्निरजायत॥ १२॥ नाभ्याऽआसीदन्त
रिक्षꣳशीर्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्याम्भूमि
र्दिशꣳश्रोत्रात्तथालोकाँ २॥ ऽअकल्पयन्
॥ १३॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥
वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः

॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा यद्यज्ञन्तन्वाना ऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्त यत्रपूर्व्वेसाध्याः सान्तिदेवाः ॥ १६ ॥ अद्भ्यःसम्भृतं पृथिव्यैरसाच्चविश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्यत्त्वष्टाविदधद्रूपमे

तितन्मर्त्यस्यदेवत्वमाजानमग्रे ॥१७॥ वेदा
हमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः पर
स्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यःप
न्थाविद्यतेयनाय ॥१८॥ प्रजापतिश्चरतिगर्भे
ऽअन्तरजायमानोबहुधाविजायते ॥ तस्ययो
निम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवना
निविश्वा ॥१९॥ योदेवेभ्यऽआतपतियोदे

वानाम्पुरोहितं ॥ पूर्व्वोयोदेवेभ्योजातोनमो
रुचायब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जनयन्तोदे
वाअग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्य
देवाऽअसन्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चप
त्न्यावहोरात्रे पार्श्वेनक्षत्राणिरूपमश्विनौ
व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्व्वलो
कम्मऽइषाण ॥ २२ ॥ इति द्वितीयो

ऽध्यायः ॥२॥ ॐ॥ आशुःशिशानोवृषभोन
भीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्द
नोऽनिमिषऽएकवीरःशतꣳसेनाऽअजयत्साक
मिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनानिमिषेणजिष्णु
नायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेण
जयततत्सहध्वंयुधोनरऽइषुहस्तेनवृष्णा
॥२॥ सऽइषुहस्तैःसनिषङ्गिभिर्वशीसꣳस्रष्टा

सयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहु
शर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥ बृह
स्पतेपरिदीयारथेनरक्षोहामित्राँ २॥ ऽअपबा
धमानꣳ ॥ प्रभञ्जन्त्सेनाꣳ प्रमृणोयुधाजय
न्नस्माकमेध्यवितारथानाम् ॥ ४ ॥ बलविज्ञा
यस्थविरꣳ प्रवीरꣳ सहस्वान्वाजीसहमानऽउ
ग्रः॥ ऽअभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्र

रथमातिष्ठगोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदंव
ज्रबाहुञ्जयन्तमज्मप्रमृणान्तमोजसा ॥ इ
मꣳसजाताऽअनुवीरयद्ध्वमिन्द्रꣳसखायोऽअ
नुसꣳरभद्ध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाह
मानोदयोव्वीरꣳशतमन्न्युरिन्द्रः ॥ दुश्च्यवनः
पृतनाषाडयुद्ध्योस्म्माकꣳसेनाऽअवतुप्प्रयुत्सु
॥ ७ ॥ इन्द्रऽआसान्नेताबृहस्प्पतिर्द्दक्षिणाय

ज्ञ॒ऽपुरऽएतु॒सोम॑÷॥ दे॒वसे॒नाना॑माभिभञ्ज॒ती॒
ना॒ञ्जयं॑न्तीनाम्म॒रु॒तो॑यु॒न्त्वग्ग्र॑म् ॥८॥ इन्द्र॑स्य
वृष्णो॒व्वरु॑णस्य॒राज्ञ॒ऽआ॒दि॒त्याना॑म्म॒रुता॑ᳪं॒
शर्द्ध॑ऽउ॒ग्ग्रम् ॥ म॒हाम॑नसाम्भु॒व॒न॒च्च्य॒वाना॒ङ्घो
षो॑दे॒वाना॒ञ्जयं॑ता॒मुद॑स्त्थात् ॥९॥ उर्द्धर्षयमघ
व॒न्नायु॑धान्यु॒त्स॒त्त्व॑नाम्मा॒म॒का॒नाम्मना॑ᳪंसि॥
उद्वृ॑त्रहन्वाजिनां॑ वाजि॑ना॒न्यु॒द्रथा॑ना॒ञ्जयं॑तां॒य्य

न्तुघोषाः ॥१०॥ अस्माकमिन्द्रः समृतेषुध्वजेष्वस्माकंय्याऽइषवुस्ताजयन्तु॥ अस्माकंव्वीराऽउत्तरेभवन्त्वस्माँ२॥उंदेवाऽअवताहवेषु॥११॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्प्वेपरेहि॥ अभिप्प्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्त्रास्तमसासचन्ताम्॥१२॥अवसृष्टापरापतशरव्ये ब्रह्मसःशिते॥ गच्छामित्त्रान्प्र

पद्यस्वमामीषाङ्कञ्चनोच्छिषं॥१३॥ प्रेताजय
तानरऽइन्द्रोवुंशर्म्मयच्छतु॥ उग्ग्रावः सन्तु
बाहवोनाधृष्ष्यायथासथ॥१४॥ असौयासेना
मरुतंपरेषामभ्यैतिनऽओजसास्पर्द्धमाना॥
ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्य
न्नजानन्॥१५॥ यत्रबाणाःसम्पतन्तिकुमा
राव्विशिखाऽइव॥तन्नऽइन्द्रोबृहस्पतिरदितिं

शर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु ॥१६॥ म
र्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृ
तेनानुवस्ताम् ॥ उरोर्व्वरीयोवरुणास्तेकृणोतुज
यन्तन्त्वानुदेवामदन्तु ॥१७॥ इति तृतीयो
ऽध्यायः ॥ ३ ॥ ॐ ॥ विभ्राड्बृहत्पिब
तुसोम्म्यम्मध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥ वा
तजूतोयोऽअभिरक्षतित्त्मनाप्प्रजाःपुपोषपुरु

धाव्विराजति ॥ १ ॥ उदुत्त्यञ्जातवेदसन्देवंव्वह न्तिकेतवः ॥ दृशेव्विश्वायसूर्य्यम् ॥ २॥ येना पावकचक्षसाभुरण्यन्तञ्जनाँ २॥ ऽअनु ॥ त्वं व्वरुणपश्यसि ॥ ३ ॥ दैव्यावध्वर्य्यूऽआगतꣳर थेनसूर्य्यत्वचा ॥ मद्ध्वायज्ञꣳसमञ्जाथे ॥ तम्प्र क्नथाऽयंव्वेनश्चित्रन्देवानाम् ॥ ४ ॥ तम्प्रत्क्नथा पूर्व्वथाव्विश्वथेमथाज्ज्येष्ठतातिम्बर्हिषदꣳस्वर्व्वि

दम् ॥ प्रतीचीनंवृजनन्दोहसेधुनिमाशुञ्जयन्तु

मनुयासुवर्द्धसे ॥ ५ ॥ अयंवेनश्चोदयत्पृश्निगर्भा

ज्ज्योतिर्ज्जरायूरजसोविमाने ॥ इममपाᳪ

सङ्गमेसूर्य्यस्य शिशुन्नविप्रामतिभीरिहन्ति

॥६॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य

वरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽअन्त

रिक्षᳪसूर्य्यऽआत्माजगतस्तस्थुषश्च ॥ ७ ॥

आनऽइडाभिर्व्विदथेसुशस्तिव्विश्वानरःसवि
तादेवऽएतु ॥ अपियथायुवानोमत्सथानोव्वि
श्वञ्जगदभिपित्वेमनीषा ॥८॥ यदद्यकच्चवृत्र
हन्नुदगाऽअभिसूर्य्य॥ सर्व्वन्तदिन्द्रतेव्वशे॥९॥
तरणिर्व्विश्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य ॥ व्वि
श्वमाभासिरोचनम् ॥१०॥ तत्सूर्य्यस्यदेवत्व
न्तन्महित्वम्मद्ध्याकर्त्तोर्व्विततःसञ्जभार॥य

देदयुक्तहुरितः सधस्त्थादाद्द्रात्रीव्वासंस्तनुते सिमस्म्मै ॥ ११ ॥ तन्मित्रस्यव्वरुणास्याभिच चेसूर्य्यौरूपड्कृणुतेद्योरुपस्त्थे ॥ अनन्तम न्यद्रुशदस्यपाजः कृष्णामन्यद्धरितंसम्भर न्ति ॥ १२॥ बण्महाँ२॥असिसूर्य्यबडादित्य महाँ२॥ऽअसि॥ महस्तेसतोमहिमापनस्यत द्धादेवमहाँ२॥ऽअसि ॥ १३॥ बट्सूर्य्यश्रवमहाँ

२॥ऽश्रासिसत्राेदेवमहाँ २॥ऽश्रासि॥ मह्नादेवा
नांमसुरर्य्यः पुरोहितोव्विभुज्ज्योतिरदाभ्यम्
॥१४॥ श्रायन्तऽ इवसूर्र्यंव्विश्वेदिन्द्रस्यभक्त
त॥ व्वसूनिजातेजनमानऽश्रोजसाप्प्रतिभाग
न्नदीधिम ॥ १५॥ श्रद्यादेवाऽउदितासूर्य्यस्य
निरंहसंपिपृतानिरवद्यात्॥ तन्नोमित्रोव्व
रुणोमामहन्तामदितिंःसिन्धुःपृथिवीऽउत

द्यौः॥ १६ ॥ आकृष्णेनरजसावर्त्तमानोनिवे
शयन्नमृतम्मर्त्यंञ्च ॥ हिरण्ययेनसवितारथेना
देवोयातिभुवनानिपश्यन् ॥१७॥
इति चतुर्थोऽध्यायः ॥ ४ ॥ ॐ ॥ नमस्तेरुद्रम
न्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्यामुततेन
मः ॥ १ ॥ याते रुद्रशिवातनूरघोरापापका
शिनी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभि

चांकशीहि ॥ २ ॥ यामिषुङ्गिरिशन्तुहस्तेबिभ
र्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिंꣳसीः
पुरुषुञ्जगत् ॥ ३ ॥ शिवेनव्वचसात्त्वागिरिशा
च्छावदामसि ॥ यथानःसर्व्वमिज्जगदयक्ष्मꣳ
सुमनाऽअसत् ॥ ४ ॥ अद्ध्यवोचदधिवक्ताप्प्रथ
मोदैव्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्वा
श्चयातुधान्न्योधराचीः परासुव ॥ ५ ॥ असौय

स्ताम्म्रोऽअरुणऽउतबभ्रुः सुमङ्गलः ॥ येचै
नꣳरुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषाꣳ
हेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्रीवो
विलोहितः ॥ उतैनंगोपाऽअदृश्रन्नदृश्रन्नुदहा
र्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनील
ग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेऽअस्यस
त्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्व

नुस्त्वमुभयोरात्न्योँर्ज्यांम ॥ याश्चतेहस्तऽइष वुः परताभगवोवप ॥ ९ ॥ विज्ज्यन्धनुःकप र्दिनोविशल्ल्योबाणवाँ२॥ऽउत ॥ अनेशन्न स्युयाऽइषवत्राभुरस्यनिषङ्गधिः ॥ १० ॥ या ते हेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्म्मा न्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेध न्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइ

पुधिस्तवारेऽअस्म्मान्निधेहितम् ॥ १२ ॥ अवत
त्यधनुष्ट्वꣳसहस्राक्षशतेषुधे ॥ निशीर्य्यशु
ल्ल्यानाम्मुखाशिवोनःसुमनाभव ॥१३॥ न
मस्तऽआयुधायानाततायधृष्ष्णवे॥उभाब्भ्या
मुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥१४॥ मानो
महान्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुत
मानऽउक्षितम् ॥ मानोव्वधीःपितरम्मोतमात

रुम्मानं॑ प्प्रियास्तन्न्वोरुद्द्ररीरिषः ॥१५॥ मा नंस्तोके तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्नुद्द्रभामिनोव्वधीर्हविष्ष्मंन्तः सदमित्त्वांहवामहे॥१६॥ नमोहिरंण्यबाहवेसेनान्येदिशाञ्चपतंयेनमोनमोव्वृक्षेब्भ्योहरिंकेशेब्भ्यः पशूनाम्पतंयेनमोनमं॑ शष्प्पञ्जरायत्त्विषीमतेपथीनाम्पतंयेनमोनमो

हरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोब

भ्लुशाय॥१७॥नमोबभ्लुशायव्याधिनेन्नानां

म्पतयेनमोनमोभवस्यहेत्यैजगताम्पतयेनमो

नमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोन

मः सूतायाहन्त्यैवनानाम्पतयेनमोनमोरोहि

ताय॥१८॥नमोरोहिताय स्थपतयेवृक्षाणाम्प

तयेनमोनमोभुवन्तयेवारिवस्कृतायौषधीना

म्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां

म्पतये नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्ती

नाम्पतये नमो नमः कृत्स्नायतया॥ १९॥ नमः

कृत्स्नायतया धावते सत्त्वनाम्पतये नमो नमः स

हमानाय निव्याधिनऽआव्याधिनीनाम्पतये न

मो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये न

मो नमो निचेरवे परिचरायारण्यानाम्पतये नमो॥

नमोव्वञ्चते ॥२०॥ नमोव्वञ्चते परिवञ्चतेस्तायू
नाम्पतयेनमोनमोनिषङ्गिरणाऽइषुधिमतेतस्क
राणाम्पतयेनमोनमः सृकायिभ्योजिघाᳪ
सद्भ्योमुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्च
रद्भ्योव्विकृन्तानाम्पतयेनमः ॥ २१ ॥ नमऽउ
ष्णीषिणे गिरिचरायकुलुञ्चानाम्पतयेनमो
नमऽइषुमद्भ्योधन्वायिभ्यश्च वोनमोनमऽआ

तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥२७॥

तन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽ आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यः ॥२२॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽ आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्व

पतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविवि
द्ध्यन्तीभ्यश्चवोनमोँनम ऽउगणाभ्यस्तृꣳह
तीभ्यं श्चवोनमोनमोगणेभ्यः ॥२४॥ नमो
गणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्यो
व्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सप
तिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपे
भ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमऽ

सेनाभ्यऽसेनानिभ्यश्च वोनमोनमोरथिभ्यो ऽअरथेभ्यश्च वोनमोनमः क्षत्तृभ्यः सङ्ग्रही तृभ्यश्च वोनमोनमोमहद्भ्योऽअर्भकेभ्यश्च वो नमः॥२६॥ नमस्तक्षभ्योरथकारेभ्यश्च वो नमोनमः कुलालेभ्यः कर्म्मारेभ्यश्च वोनमो नमोनिषादेभ्यः पुञ्जिष्ठेभ्यश्च वोनमोनमः श्वनिभ्योमृगयुभ्यश्च वोनमोनमः श्वभ्यः

॥२७॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने ॥२८॥ नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय॥२९॥ नमो ह्रस्वाय च

वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोग्र्याय च प्रथमाय च नमऽआशवे॥३०॥ नमऽआशवे चाजिराय च नमः शीग्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च॥३१॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च

बुध्न्यायचनमः सोभ्याय॥३२॥नमः सोभ्याय चप्रतिसर्याय चनमोयाम्याय चक्षेम्याय चनमः श्लोक्याय चावसान्याय चनमऽउर्वर्याय चखल्याय चनमोवन्याय॥३३॥नमोवन्याय चकक्ष्याय चनमः श्रवाय चप्रतिश्रवाय चनमऽआशुषेणाय चाशुरथाय चनमः शूराय चाव भेदिने चनमोबिल्मिने ॥३४॥ नमोबिल्मिने

चकवचिनेचनमोव्वर्म्मिणेचव्वरूथिनेचनमः
श्रुतायचश्रुतसेनायचनमो दुन्दुभ्यायचाहन
न्यायचनमोधृष्णवे ॥ ३५ ॥ नमोधृष्णवे
चप्रमृशायचनमो निषङ्गिणेचेषुधिमतेचनमः
स्तीक्ष्णेषवेचायुधिनेचनमः स्वायुधायचसुध
न्वनेच ॥ ३६ ॥ नमः स्रुत्याय चपथ्यायचन
मः काट्यायचनीप्यायचनमः कुल्यायचस

रस्यायचनमोनादेयायचव्वैशन्तायचनमꣳकू
प्प्याय ॥३७॥ नमꣳकूप्प्याय चावट्ट्यायचन
मोव्वीध्र्यायचातप्प्यायच नमोमेग्घ्यायच व्विद्यु
त्यायचनमोव्वर्ष्यायचावर्ष्यायचनमोव्वात्या
य ॥३८॥ नमोव्वात्याय चरेष्म्म्यायचनमोव्वा
स्तव्व्यायचव्वास्तुपायचनमꣳसोमायचरुद्राय
चनमस्ताम्म्रायचारुणायचनमःशङ्गवे।३९।

नमः॑ शङ्ग॒वे॑ च पशु॒पत॑ये च॒ नम॑ऽउ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ऽग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥४०॥ नमः॑ शम्भ॒वाय॑। च मयोभ॒वाय॑ च॒ नमः॑ शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑ च शि॒वत॑राय च ॥ ४१ ॥ नम॒ᳪ पार्या॑य चावा॒र्या॑य च॒ नमः॑ प्र॒तर॑णाय चो॒त्तर॑णाय च॒

नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय ॥४२॥ नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च नमो व्रज्याय ॥४३॥ नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः

कात्यायचगह्वरेष्ठायचनमुःशुष्क्याय ॥४४॥
नमुःशुष्क्याय चहरित्यायचनमः पाꣳस
व्यायचरजस्यायचनमोलोप्यायचोलप्याय
चनमऽऊर्व्यायचसूर्व्यायचनमः पर्णाय।४५।
नमः पर्णायचपर्णशदायचनमऽउद्गुरमाणा
यचाभिग्घ्नतेचनमऽआखिदतेचप्प्रखिदतेच
नमऽइषुकृद्भ्योधनुष्कृद्भ्यश्श्ववोनमोनमोवःकि

रिकेभ्योदेवाना हृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥ ४६ ॥ द्रापेऽअन्धसस्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः किञ्चनाममत् ॥ ४७ ॥ इमारुद्राय तवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्ट

ङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशि
वातनूःशिवाविश्वाहाभेषजी । शिवारुतस्य
भेषजीतयानोमृडजीवसे ॥ ४९ ॥ परिनोरुद्र
स्यहेतिर्वृणक्तुपरित्त्वेषस्यदुर्म्मतिरघायोः ॥ अ
वस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनया
यमृड ॥५०॥ मीढुष्टमशिवतमशिवोनःसुम
नाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवस

नऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकि
रिद्द्रविलोहितनमस्तेऽअस्तुभगवः ॥ यास्ते
सहस्रꣳहेतयोन्यमस्मान्निवपन्तुताः ॥ ५२ ॥
सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासा
मीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥
असङ्ख्यातासहस्राणियेरुद्राऽअधिभूम्याम्॥
तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५४ ॥

अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषा
ᳪंसहस्रयोजनेवधन्वानितन्मसि ॥ ५५ ॥ नी
लग्रीवाᳪंशितिकण्ठादिवᳪंरुद्राऽऽउपश्रिश्र
ताᳪं ॥ तेषाᳪंसहस्रयोजनेवधन्वानितन्मसि
॥ ५६ ॥ नीलग्रीवाᳪंशितिकण्ठाᳪंशर्वाऽअधः
क्षमाचराः ॥ तेषाᳪंसहस्रयोजनेवधन्वानित
न्मसि ॥ ५७ ॥ येवृक्षेषु शष्पिञ्जरानीलग्री

वाव्विलोहिताः ॥ तेषाᳫं सहस्रयोजनेवधन्न्वा
नितन्मसि ॥५८॥ येभूतानामधिपतयोव्विशि
खासः कपर्द्दिनः ॥ तेषाᳫं सहस्रयोजनेवध
न्न्वानितन्मसि ॥५९॥ येपथाम्पथिरक्षयऽऐल
बृदाऽआयुर्य्युधः ॥ तेषाᳫं सहस्रयोजनेवध
न्न्वानितन्मसि ॥ ६० ॥ येतीर्थानि प्प्रचरन्ति
सृकाहस्तानिषङ्गिणः ॥ तेषाᳫं सहस्रयोजने

थिद्व्यांयेषामन्नमिषवः॥ तेभ्योदशप्राचीर्दश

दक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः॥ ते

भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय

न्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥६६।

इति पञ्चमोऽध्यायः।५। ॐव्वयꣳसो

मव्व्रतेतवमनस्तनूषुबिभ्रतः। प्रजावन्तꣳसचेम

हि।१। एषतेरुद्रभागः सहस्वस्राम्बिकयातञ्जु

षस्वस्वाहैषतेरुद्र भागऽआखुस्तेपशुः ॥ २ ॥
अवरुद्र मंदीमह्यवंदेवन्त्र्यम्बकम् ॥ यथानोव
स्यसस्करद्यथानः श्रेयसस्करद्यथानोव्यवसा
ययात् ॥ ३ ॥ भेषजमसि भेषजङ्गवेश्वायपुरु
षायभेषजम् ॥ सुखम्मेषायमेष्यै ॥४॥ त्र्यम्ब
कंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुक
मिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ त्र्य

वृधन्वानितन्मसि॥ ६१ ॥ येन्नेषु व्विविद्ध्यन्ति पात्रेषुपिबतोजनान् ॥ तेषांॅसहस्रयोजनेवुधन्न्वानितन्न्मसि॥६२॥यऽएतावन्तश्चभूयांॅसश्चदिशोरुद्द्राव्वितास्थिरे॥तेषांॅसहस्रयोजनेवुधन्न्वानितन्न्मसि॥६३॥नमोस्तुरुद्रेब्भ्यो येदिवियेषांव्वर्षमिषवंः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः।

तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय
न्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः।६४।
नमोस्तु रुद्रेब्भ्योयेन्तारिक्षेयेषांव्वातऽइषवः॥
तेब्भ्योदशप्प्राचीर्द्दशदक्षिणादशप्प्रतीचीर्द्द
शोदीचीर्द्दशोर्द्ध्वाः॥ तेब्भ्योनमोऽअस्तुतेनोव
न्तुतेनोमृडयन्तु तेयन्द्विष्मोयश्च नोद्वेष्टित
मेषाञ्जम्भेदध्मः॥६५॥ नमोस्तु रुद्रेब्भ्योयेपृ

थिद्ध्यांयेषामन्नमिषवᳪं॥तेभ्योदशप्राचीर्दश
दक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः॥ते
भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय
न्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥६६।
इति पञ्चमोऽध्यायः।५। ॐव्वयᳪसो
मव्व्रतेतवमनस्तनूषुबिभ्रतः।प्रजावन्तᳪंसचेम
हि।१।एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जु

षस्वस्वाहैषतेरुद्र भागऽआखुस्तेपशुः ॥ २ ॥
अवरुद्र मदीमह्यवदेवन्त्र्यम्बकम् ॥ यथानोव्व
स्यसस्कर द्यथानः श्रेयसस्कर द्यथानोव्यवसा
ययात् ॥ ३ ॥ भेषजमसि भेषजङ्गवेश्वायपुरु
षायभेषजम् ॥ सुखम्मेषायमेष्यै ॥४॥ त्र्यम्ब
कंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुक
मिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ त्र्य

म्बकंस्यजामहेसुगन्धिम्पतिवेदनम् ॥उर्व्वारुक
मिवुबन्धनादितोमुक्षीयमामुतः ॥५॥ एतत्ते
रुद्रावसन्तेनपरोमूजवतोतीहि। अवततधन्न्वा
पिनाकावसꣳकृत्तिवासाऽअहिꣳसन्नःशिवोती
हि॥६॥ त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्यायु
षम्॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम्
॥७॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽ

अस्तुमामाहिꣳसीः॥ निवर्त्तयाम्म्यायुषेन्नाद्या यप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवी र्य्याय॥८॥ इति षष्ठोऽध्यायः॥६॥

ॐ॥ उग्रश्श्च भीमश्च्ध्वान्तश्च्धुनिश्च॥ सासह्वाँश्श्चाभियुग्वाचविक्षिपःस्वाहा॥१॥ अग्निꣳ हृदयेनाशनिꣳ हृदयाग्ग्रेणपशुपतिङ्कृ त्स्नहृदयेनभवंय्यक्ना॥ शर्व्वम्मतस्न्नाभ्यामी

शानम्मन्न्युनामहादेवमन्तं पशुघ्येनोग्ग्रन्दे
वंव्वानिष्ठुनांव्वासिष्ठुहनुं शिङ्गीनिकोश्याभ्म्या
म् ॥ २ ॥ उग्ग्रंल्लोहितेन मित्रꣳसौव्व्रत्त्येनरुद्द्र
न्दौर्व्व्रत्त्येनेन्द्रम्प्रक्क्रीडेनमरुतोबलेनसाद्ध्यान्
प्प्रमुदा ॥ भवस्यकण्ठ्यꣳरुद्द्रस्यान्तं पार्श्व्यं
म्महादेवस्ययकृच्छर्व्वस्यंव्वनिष्ठुः पशुपतेः पु
रीतत् ॥३॥ लोमभ्भ्युः स्वाहा लोमभ्भ्युः स्वा

हा॑त्त्वुचेस्वाहा॑त्त्वुचेस्वाहा॒लोहि॑ताय॒स्वाहा॒लो
हि॑ताय॒स्वाहा॒मेदो॑भ्य॒ꣳस्वाहा॒मेदो॑भ्य॒ꣳस्वा
हा॑मा॒ꣳसेभ्य॒ꣳस्वाहा॑मा॒ꣳसेभ्य॒ꣳस्वाहा॒स्ना
व॑भ्य॒ꣳस्वाहा॒स्नाव॑भ्य॒ꣳस्वाहा॒ऽस्थभ्य॒ꣳ
स्वाहा॒ऽस्थभ्य॒ꣳस्वाहा॑म॒ज्जभ्य॒ꣳस्वाहा॑म॒ज्ज
भ्य॒ꣳस्वाहा॑ रेत॑से॒स्वाहा॑पा॒यवे॒स्वाहा॑ ॥ ४ ॥
आ॒या॒सा॒य॒स्वाहा॑ प्रा॒या॒सा॒य॒स्वाहा॑संया॒सा

यस्वाहाव्वियासायस्वाहोद्यासायस्वाहा ॥ शुचे
स्वाहाशोचतेस्वाहाशोचमानायस्वाहाशोका
यस्वाहा ॥५॥ तपसेस्वाहा तप्प्यतेस्वाहातप्प्य
मानायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा ॥ नि
ष्कृत्यैस्वाहाप्प्रायश्चित्त्यैस्वाहाभेषजायस्वाहा
॥६॥ यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहा ॥
ब्रह्मणेस्वाहाब्रह्महत्यायैस्वाहाव्विश्वेब्भ्योदेवे

भ्युः स्वाहाद्यावापृथिवीभ्याᳪंस्वाहा ७।

इति सप्तमोऽध्यायः ॥७॥ ॐ ॥ वाजश्च

मेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधी

तिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमे श्र

वश्चमेश्रुतिश्चमेज्ज्योतिश्चमेस्वश्चमेय

ज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्च मेपानश्चमे

व्यानश्चमेसुश्चमेचित्तञ्चमऽआधीतञ्चमेवा

क्चमेमनश्श्चमेचक्षुश्श्चमेश्श्रोत्रञ्चमेदक्षश्श्च मेबलञ्चमेयज्ञेनकल्पन्ताम् ॥२॥ ओजश्श्च मे सहश्श्चमऽआत्माचमेतनूश्श्चमेशर्म्मचमेव र्म्मचमेङ्गानिचमेस्थीनिचमेपरूंषिचमेशरी राणिचमऽआयुश्श्चमेजराचमेयज्ञेनकल्पन्ता म्।३। ज्यैष्ठ्यञ्च मऽआधिपत्त्यञ्चमेमन्युश्श्चमे भामश्श्चमेमश्श्चमेम्भश्श्चमेजेमाचमेमहिमाचमे

व्वरिमाचमेप्प्रथिमाचमेव्वर्षिमाचमेद्द्राघिमाच मेव्वृद्धञ्चमेव्वृद्धिश्चमेयज्ञेनकल्पन्ताम् ॥४॥ सत्त्यञ्च मे श्रद्धाचमेजगच्चमेधनञ्चमेव्विश्वञ्च मेमहश्चमेक्क्रीडाचमेमोदश्चमेजातञ्चजनिष्ष्य माणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ता म् ॥५॥ ऋतञ्च मेमृतञ्चमेयक्ष्मञ्चमेनामय च्चमेजीवातुश्चमेदीर्घायुत्वञ्चमेनमित्त्रञ्चमेभय

ञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेय
ज्ञेनकल्पन्ताम् ॥ ६ ॥ यन्ताच मेधर्ताचमे
क्षेमश्चमेधृतिश्चमेविश्वञ्चमेमहश्चमेसंविच्चमे
ज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरञ्चमेलयश्चमेयज्ञे
नकल्पन्ताम् ॥ ७ ॥ शञ्चमेमयश्चमेप्रियञ्च
मेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमे
द्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमेयश

श्चमेयज्ञेनकल्पन्ताम् ॥ ८ ॥ ऊर्क्चँ मेसूनृता
चमेपयश्चमेरसश्चमेघृतञ्चमेमधुचमेसग्धिश्च
मेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔ
द्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्च मे
रायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमेपू
र्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमे
क्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥ वित्तञ्च मे

वेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसुगञ्चमेसुपत्थ्य
ञ्चमऽऋद्धञ्चमऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्च
मेमतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम्।११।
व्रीहयश्च मेयवाश्चमेमाषाश्चमेतिलाश्चमेमुद्गा
श्चमेखल्वाश्चमेप्रियङ्गवश्चमेणवश्चमेश्यामा
काश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमेय
ज्ञेनकल्पन्ताम् ॥१२॥ अश्म्माच मेमृत्तिका

चमेगिरयश्चमेपर्वताश्चमेसिकताश्चमेवनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्यामञ्चमेलोहञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् ॥१३॥ अग्निश्च मऽआपश्चमेवीरुधश्चमऽओषधयश्चमेकृष्टपच्याश्चमेकृष्टपच्याश्चमेग्राम्म्याश्चमेपशवऽआरण्याश्चमेवित्तञ्चमेवित्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनकल्पन्ताम् ॥१४॥ वसुच

मेव्वसुतिश्च मेकर्म्मं च मेशक्तिश्च मेत्र्थश्च मऽएम श्च मऽइत्या च मेगतिश्च मेयज्ञेनकल्पन्ताम्
(न.)
॥१५॥ अग्निश्च मऽइन्द्रश्च मेसोमश्च मऽइन्द्र श्च मेसविता च मऽइन्द्रश्च मेसरस्वती च मऽइन्द्र श्च मेपूषा च मऽइन्द्रश्च मेबृहस्पतिश्च मऽइन्द्र श्च मेयज्ञेनकल्पन्ताम् ॥ १६ ॥ मित्रश्च मऽइ न्द्रश्च मेवरुणश्च मऽइन्द्रश्च मेधाता च मऽइन्द्र

श्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म ऽइन्द्रश्च मे
विश्वे च मे देवा ऽइन्द्रश्च मे यज्ञेन कल्पन्ताम्
॥१७॥ पृथिवी च म ऽइन्द्रश्च मेन्तरिक्षञ्च म ऽ
इन्द्रश्च मे द्यौश्च म ऽइन्द्रश्च मे समाश्च म ऽइन्द्रश्च
मे नक्षत्राणि च म ऽइन्द्रश्च मे दिशश्च म ऽइन्द्रश्च
मे यज्ञेन कल्पन्ताम् ॥ १८ (न.) ॥ अंशुश्च मे र
श्मिश्च मेदाभ्यश्च मेधिपतिश्च म उपांशुश्च

मेन्तर्य्यामश्च मऽऐन्द्रवायवश्च मेमैत्रावरुणश्च

मऽआश्विनश्च मेप्रतिप्रस्थानश्च मेशुक्रश्च मे

मन्थीचमेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आग्रयण

श्च मेवैश्वदेवश्च मेध्रुवश्च मेवैश्वानरश्च मऽऐन्द्रा

ग्नश्च मेमहावैश्वदेवश्च मेमरुत्वतीयाश्चमेनि

ष्केवल्यश्चमेसावित्रश्चमेसारस्वतश्च मेपात्नी

वतश्चमे हारियोजनश्चमेयज्ञेनकल्पन्ताम्

॥२०॥ स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मे ऽधिषवणे च मे पूतभृच्च म ऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मे ऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥२१॥ अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मे ऽश्वमेधश्च मे पृथिवी च मे ऽदितिश्च मे दितिश्च मे द्यौश्च मे ऽङ्गुलयः शक्वर

योदिशश्चमेयुज्ञेनकल्पन्ताम् ॥२२॥ व्रूतञ्च
मऽऋृतवंश्चमुतपश्चमेसंवत्सुरश्चमेहोरुात्रेऽ
ऊर्वष्ठीवेबृहद्रथन्तुरेचंमेयुज्ञेनकल्पन्ताम्
(न०)
॥२३॥ एकाच मेतिुस्रश्चमेतिुस्रश्चमुेपञ्चच
मेुपञ्चचमेसुप्तचंमेसुप्तचंमुेनवंचमुेनवंचमुऽ
एकादशाचमुऽएकादशाचमुेत्रयोदशाचमुेत्रयो
दशाचमुेपञ्चदशाचमेपञ्चदशाचमेसुप्तदशाचमे

सप्तदशश्च मे नवदशश्च मे नवदशश्च म एकविꣳशतिश्च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ २४ ॥ चतस्रश्च

मेष्टौचमेष्टौचमेद्वादशचमेद्वादशचमेषोडश
चमेषोडशचमेविꣳशतिश्चमेविꣳशतिश्चमे
चतुर्विꣳशतिश्चमेचतुर्विꣳशतिश्चमेष्टाविꣳश
तिश्चमेष्टाविꣳशतिश्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳ
शच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳ
शच्चमेचत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्च
मेचतुश्चत्वारिꣳशच्चमेष्टाचत्वारिꣳशच्चमेष्

(न॰)
ज्ञेनकल्पन्ताम् ॥२५॥ त्र्यविश्च मेत्र्युवीचमे

दित्युवाट्च्चमेदित्यौहीचमेपञ्चाविश्चमेपञ्चा

वीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्य्यवाट्चमे

तुर्य्यौहीचमेयज्ञेनकल्पन्ताम् ॥२६॥ पष्ठवा

ट्च मेपष्ठौहीचमऽउक्षाचमेवशाचमऽऋषभ

श्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञेनकल्प

(न॰)
न्ताम् ॥२७॥ वाजायस्वाहा प्रसवायस्वाहा

पिजायस्वाहाक्रतवेस्वाहा॒ वसवेस्वाहाहर्पतये
स्वाहान्हेमुग्धायस्वाहामुग्धायवैन॑शिनाय
स्वाहाविन॑शिनऽआन्त्यायनायस्वाहान्त्या
यभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतये
स्वाहाप्रजापतयेस्वाहा ॥ इयन्तेराण्मित्राय
यन्तासियमनऽऊर्जैत्वावृष्ट्यैत्वाप्रजाना
न्त्वाधिपत्याय ॥२८॥ आयुर्यज्ञेन कल्पत

म्प्राणोयज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्पता ᳪं
श्श्रोत्रंयज्ञेनकल्पतां व्वाग्यज्ञेनकल्पताम्म
नोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मा
यज्ञेनकल्पताञ्ज्योतिर्य्यज्ञेनकल्पता ᳪं स्व
र्य्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पतांयज्ञोयज्ञे
नकल्पताम् ॥ स्तोमश्श्चयजुश्श्चऽऋक्चसा
मंचबृहच्चरथन्तरञ्च ॥ स्वर्द्देवाऽअगन्मामृतां

ऽअभूमप्प्रजापतेꣳप्प्रजाऽअभूमवेद्स्वाहा ॥२६॥ इति अष्टमोऽध्यायः ॥ ८ ॥

ओ॒ॅ ॥ ऋचंव्वाचम्प्रपद्येमनोयजुꣳप्प्रपद्येसाम प्प्राणम्प्रपद्येचक्षुꣳश्रोत्रम्प्रपद्ये ॥ व्वागोजः स हौजोमयिप्प्राणापानौ ॥ १ ॥ यन्मेच्छिद्रञ्च क्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्प्पति र्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्प्पतिः

॥ २ ॥ भूर्भुवः स्वः । तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वा सत्योमदानाम्मꣳहिष्ठोमत्सदन्धसः ॥ दृढचिदारुजेवसु ॥ ५ ॥ अभीषुणः सखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभिः

॥ ६ ॥ कयात्वन्नऽऊत्याभिप्प्रमन्दसेव्वृषन् ॥ कयास्तोतृब्भ्यऽआभर ॥ ७ ॥ इन्द्रोव्विश्वस्य राजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्प्पदे ॥ ८ ॥ शन्नोमित्त्रꣳशंव्वरुणꣳशन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्प्पतिꣳशन्नोव्विष्णुरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातः पवताꣳशन्नस्तपतुसूर्य्यः ॥ शन्नꣳकनिक्रदद्देवः पर्ज्जन्योऽअभिवर्षतु ॥ १० ॥

अहानिशम्भवन्तुनᳪंशᳪरात्रीᳪंप्प्रतिधीयता
म् ॥ शन्नऽइन्द्राग्नीभवतामवोभिःᳪंशन्नऽइन्द्रा
वरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजसा
तौशमिन्द्रासोमासुवितायशंय्योः ॥ ११ ॥ श
न्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्यो
रभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि नोभवा
नृक्षरानिवेशनी ॥ यच्छानःᳪंशर्म्मसप्रथाः

॥१३॥ आपोहि ष्ठामयोभुवस्तानऽऊर्ज्जेदधात न। महेरणायचक्षसे ॥१४॥ योवःशिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः ॥ १५ ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः ॥१६॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः॥ वनस्पतयःशान्ति

व्विश्वेदेवाः शान्तिर्ब्ब्रह्मशान्तिः सर्व्वꣳशान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १७॥ दृतेदृꣳहमामित्रस्यमाचक्षुषासर्व्वाणिभूतानि समीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषासर्व्वाणिभू तानिसमीक्षे ॥ मित्रस्यचक्षुषासमीक्षामहे ॥१८॥ दृतेदृꣳहमा॥ ज्योक्तेसन्दृशिजीव्यास ज्ज्योक्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमंस्तेहरे

सेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥ अन्यांस्तेऽअ
स्म्मत्तपन्तुहेतयः पावकोऽअस्म्मभ्यंᳩशिवो
भव ॥२०॥ नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयि
त्नवे ॥ नमस्तेभगवन्नस्तुयतᳩस्वः समीहसे
॥२१॥ यतोयतᳩसमीहसेततोनोऽअभयङ्कु
रु। शन्नः कुरुप्प्रजाभ्योभयन्नᳩपशुभ्यः ॥२२॥
सुमित्त्रियानऽआपऽओषधयᳩसन्तुदुर्म्मित्त्रि

यास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म॰ ॥२३॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्येमशरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाःस्यामशरदः शतम्भूयश्चशरदः शतात् ॥२४॥ ॐ शान्तिः २॥ इतिरुद्रपद्धतौशान्त्यध्यायः ॥

# अथ स्वस्तिप्रार्थनामन्त्राः ।

हरिः ॐ स्वस्तिनऽइन्द्रोवृद्धश्श्रवाः स्वस्ति नेः पूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्प्पतिर्द्दधातु ॥ १ ॥ ॐ पयः पृथिव्यांप्पयऽओषधीषुपयोदिव्यन्तारिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ २ ॥ ॐ व्विष्णोरराटमसिव्विष्णोः श्नप्त्रेस्त्थोव्वि

ष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥ ३ ॥ ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवताऽऽदित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्व मां

भवोद्भवाय नमः ॥ ५ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ६ ॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते ऽअस्तु रुद्ररूपेभ्यः ॥ ७ ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ८ ॥ ईशानः सर्वविद्याना-मीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोऽधि-पतिर्ब्रह्मा शिवो मे ऽअस्तु सदा शिवोऽम् ॥ ९ ॥

ॐ शिवोनामासिस्वधितिस्तेपितानमस्ते ऽअस्तुमामाहिꣳसीः ॥ निवर्त्तयाम्म्यायुषेऽन्नाद्या-यप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय

ॐ व्विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥११॥ ॐ द्यौः शान्तिरन्तरिक्षᳶ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्ब्रह्मशान्तिः सर्व्वᳶ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १२ ॥ ॐ सर्व्वेषां वा एष व्वेदानाᳶरसो यत्साम सर्व्वेषामेवैनमेतद्वेदानाᳶ

रसेनाभिषिञ्चति ॥१३॥

इति स्वस्तिप्रार्थनामन्त्राः ।

ॐ शान्तिः शान्तिः शान्तिः ।

अनेन श्रीरुद्राभिषेककर्मणा श्रीभवानीशङ्कर-महारुद्रः प्रीयतां न मम ।

ॐ सदाशिवार्पणमस्तु ।



★

ॐ सद्योजातं प्रपद्यामि सद्योजातायवै नमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ १ ॥ वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः॥कालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमः ॥ सर्वभूतदमनायनमोमनोन्मनायनमः॥२॥ अघोरेभ्योथघोरेभ्योघोरघो

रतरेभ्यः॥सर्वेभ्यःसर्वशर्वेभ्यो नमस्तेअस्तुरुद्र
रूपेभ्यः॥३॥तत्पुरुषायविद्महेमहादेवायधीम
हि॥तन्नोरुद्रःप्रचोदयात्॥४॥ईशानःसर्वविद्या
नामीश्वरः सर्वभूतानाम्॥ ब्रह्माधिपतिर्ब्रह्मणो
धिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥५॥ म
नोजूतिः० हृदयायनमः इत्यादिषडङ्गन्यासा
न्कृत्वाध्यायेन्नित्यं० इति ध्यानम्।

स्कान्दे । ब्रह्मा कृतयुगे देवस्त्रेतायाम्भगवान्रविः । द्वापरे भगवान्विष्णुः कलौ देवो महेश्वरः ॥ १ ॥ अतोस्मिन्युगे शिवः सर्वैरपि सर्वदा पूज्यः । पूजा यथामिलितोपचारैः षोडशोपचारैर्वा भवति । पंचोपचारैर्वा । तत्र । गन्धपुष्पे धूपदीपौ नैवेद्य इति पञ्चकम् । गन्धादीनां मंत्राः कथिताः । अथ षोडशोपचाराः । आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च गन्धमाल्यादिभिः क्रमात् ॥ १ ॥ धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणाम् । उद्वासनं षोडशकमेवं देवार्चने विधिः ॥ २ ॥ इति नागदेवः । अथोत्तरपूजनम् । देशकालौ संकीर्त्य उत्तरपूजनमहं करिष्ये । नमस्ते० आवाहनम् । याते० आसनम् । यामिषुम्० पाद्यम् । शिवेनव्वचसा अर्घ्यम् । अध्यवोचत्० आचमनीयम् । असौय० स्नानम् । ( अत्रैव पंचामृतैः स्नपनम् । पयः पृथि-

व्याम्० पयसा। आपोहि० शुद्धोदकेन स्नानम्। दधिक्राव्णः० दध्ना। योवः० जलेन। घृतम्मिमिक्षे० घृतेन। तस्माऽअरम्० शुद्धसलिलेन। मधुव्वाता० ३मधुना स्नानम्। आपोऽअस्मान्मातरः शुन्धयन्तुघृतेनं-नोघृतप्वः पुनन्तु॥ विश्वᳪंहिरि प्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापू-तएमि॥ शुद्धामृतेन। अपाᳪंरसम्० शर्करया। शुद्धवालः० शुद्धभु-वनेन स्नपनङ्कार्यम्) असौषः वस्त्रम् (सुजातो ज्योतिषा० उपवस्त्रम्) नमोऽस्तु० यज्ञोपवीतम्। प्रमुञ्च० गन्धम्। विज्यन्धनुः० पुष्पाणि। त्र्यम्बकंयजामहे० सुगन्धिद्रव्याणि। (नमोव्विल्मिने० विल्वपत्रम्। आहिरिव० नानापरिमलद्रव्याणि।) याते० धूपः। परिते० दीपः। अवतत्यधनुः० नैवेद्यम्। (याः फलिनीः० ताम्बूलपत्रम्पूगीफलं सम-र्पयामि। हिरण्यगर्भः० दक्षिणाद्रव्यम्। नमस्ते० नमस्कारः। मानः०

प्रदक्षिणाम् । मानस्तोके० उद्वासनम् । यत्र पुरातनं लिङ्गम्मूर्त्तिर्वा वर्त्तते तत्राक्षतपुञ्जे पूगीफले वा देवस्य देवतायाश्चावाहनासने न करणीये । पाद्यादिकन्तु देयमेव । तथैव प्रतिष्ठितमूर्त्तौ नित्यपूजार्थमुद्वासनं विसर्जनञ्च न करणीयम् । इत्युत्तरपूजनम् ।

पुरुषसूक्तस्य रुद्रान्तर्गतत्वात्तस्यापि प्रयोजनलेखनमावश्यकम् । विष्णुयागे तु । प्रथमां विन्यसेद्वामे द्वितीयान्दक्षिणे करे ॥ तृतीयां वामपादे च चतुर्थीन्दक्षिणे न्यसेत् ॥ १ ॥ पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ॥ सप्तमीं वामकट्यान्तु दक्षिणस्यान्तथाष्टमीम् ॥२॥ नवमीन्नाभिमध्ये तु दशमीं हृदये तथा ॥ एकादशीङ्कण्ठदेशे द्वादशीं वामबाहुके ॥३॥ त्रयोदशीन्दक्षिणे च मुखे चैव चतुर्द्दशीम् ॥ अक्ष्णोः पञ्चदशीञ्चैव षोडशीम्मूर्ध्नि विन्यसेत् ॥ ४ ॥ इति विष्णुयागपद्धतौ ।

आन्हिकसूत्रावल्यान्तु । एकादशीं वामकुक्षौ द्वादशीन्दक्षिणे न्यसेत् ॥ कण्ठे त्रयोदशीन्न्यस्य तथा वक्त्रे चतुर्द्दशीम् ॥ १ ॥ इदमेव पाठान्तरम् । अन्यत्सर्वंसमानम् । पूजनविधौ तु । आद्ययावाहयेद्देव मृचा तु पुरुषोत्तमम् ॥ द्वितीययासनन्दद्यात्पाद्यञ्चैव तृतीयया ॥ १ ॥ अर्घश्चतुर्थ्यां दातव्यः पञ्चम्याचमनन्तथा ॥ षष्ठ्या स्नानम्प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ॥ २ ॥ यज्ञोपवीतञ्चाष्टम्या नवम्या गन्धमेव च ॥ पुष्पन्देयन्दशम्या तु एकादश्या च धूपकम् ॥ ३ ॥ द्वादश्या दीपकन्दद्यात् त्रयोदश्या निवेदनम् ॥ चतुर्द्दश्या नमस्कारम्पञ्चदश्या प्रदक्षिणाः ॥४॥

सहस्रशीर्षेत्यादिषोडशमन्त्राणाम्पुरुषसूक्तसंज्ञकानान्नारायण ऋषिरनुष्टुप्छन्दो नारायणो देवतान्त्या त्रिष्टुप्न्यासे पूजने हवने च विनियोगः । १ ॐ सहस्रशीर्षा० । वामकरे । आवाहनम् । २ पुरुषएव० ।

दक्षिणकरे । आसनम् । २ एतावानस्य० वामपादे । पाद्यम् । ४ त्रिपादूर्ध्वः० दक्षिणपादे । अर्घम् । ५ ततोविराट्० वामजानौ । आचमनम् । ६ तस्माद्यज्ञात्० दक्षिणजानौ । स्नानम् । पञ्चामृतेनापि पूर्ववत् । ७ तस्माद्यज्ञात्० वामकट्याम् । वस्त्रम् । ८ तस्मादश्वाः० दक्षिणकट्याम् । यज्ञोपवीतम् । ९ तंयज्ञम्० नाभौ । गन्धम् । १० यत्पुरुषम्० हृदये । पुष्पाणि । ११ ब्राह्मणोस्य० कण्ठे । धूपम् । १२ चन्द्रमामनसः० वामबाहौ । दीपम् । १३ नाभ्याआसीत्० दक्षिणबाहौ । नैवेद्यम् । १४ यत्पुरुषेण० मुखे । नमस्कारम् । १५ सप्तास्य० नेत्रयोः। प्रदक्षिणाम् । १६ यज्ञेनयज्ञम्० शिरसि । उद्वासनम् । नानापरिमल-द्रव्याणि स्थाने देयानि । नैवेद्यान्ते ध्यानम् । ध्यानान्त आचमनी यज्जलम् । मध्ये पानीयम् । उत्तरापोशनम् । करोद्वर्तनार्थे चन्दनानुले-

पनम् । मुखवासार्थे ताम्बूलपत्रम्पूगीफलम् । कृतायाः पूजायाः सा-
द्गुण्यार्थे दक्षिणाद्रव्यम् । समर्पयामीति सर्वत्र ।

ततो ध्यानम् । ध्येयः सदासवितृमण्डलमध्यवर्ती नारायणः सर-
सिजासनसन्निविष्टः ॥ केयूरवान्मकर कुण्डलवान्किरीटी हारी हिर-
ण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥ ततः प्रार्थना । नमस्ते पुण्डरीकाक्ष
नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ २ ॥ देवा-
नान्दानवानाञ्च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वन्द्वं व्रजामिशर-
णन्तव ॥ ३ ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ॥ अध्यक्ष-
श्चानुमन्ता च गुणमायासमावृतः ॥ ४ ॥ संसारसागरङ्घोरमनन्तङ्क्ले-
शभाजनम् ॥ त्वामेव शरणम्प्राप्य निस्सरन्ति मनीषिणः ॥ ५ ॥ न
ते रूपन्न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्ता-

नान्त्वम्प्रकाशसे ॥ ६ ॥ नैव किञ्चित्परोक्षन्ते प्रत्यक्षोऽसि न कस्य-चित् ॥ नैव किञ्चिदसाध्यन्ते न च साध्योसि कस्यचित् ॥ ७ ॥ का-र्याणाङ्कारणम्पूर्वं वचसां वाक्यमुत्तमम् ॥ योगिनाम्परमा सिद्धिः पर-मन्ते परं विदुः ॥ ८ ॥ अहम्भीतोस्मि देवेश संसारेऽस्मिन्भयप्रदे ॥ त्राहि माम्पुण्डरीकाक्ष न जाने परमम्पदम् ॥ ९ ॥ कालेष्वपिचसर्वेषु-दिक्षुसर्वासुचाच्युत ॥ शरीरे दुर्गतौ वापि वर्धते मे महद्भयम् ॥१०॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वापि ॥ विज्ञानं यदिदम्प्राप्तं यदिदं स्थानमर्जितम् ॥ ११ ॥ जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ दुर्गतावपि जातस्य त्वद्गतो मे मनो रथः ॥ १२ ॥ यदि नाशन्न विन्देत तावतास्मि कृती सदा ॥ कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥ १३ ॥ चिन्तयेद्देवदेवेशङ्कालानलसमप्रभम् ॥ विस्तृतास्य-

म्महाशीर्षं रक्तास्यं रक्तचन्दनम् ॥ १४ ॥ इति । सहस्त्रशीर्षेतिषोडश-मन्त्राणाम्मध्ये प्रतिमन्त्रान्ते"ओन्नमो नारायणाय स्वाहेत्याहुतिप्रदानेन विष्णुयागो भवति । नारायणबलावप्येतैरेव मन्त्रैराहुतिः प्रदेया । इति

अथ रुद्रयागः । हवनात्म के रुद्रयागे तु मण्डपादिकरणङ्काम-नावाहुल्येन शक्तिश्चेदावश्यकम् । अशक्तौ तु सर्वत्र यथाकथञ्चिदपि करणे फलम्भविष्यत्येव । अतो यथा केवलजपात्मक अभिषेकात्मको वारुद्रो भवति तथैव हवनात्मकोऽपि सर्वदा प्रकर्तव्यः । तत्रादौ न्यासा-दिकं विधाय हवनं कुर्यात् । गणानान्त्वा० स्वाहा । अम्बेअम्बिके० स्वाहा । यज्जाग्रतइतिषण्मन्त्राणाम्मनः सूक्तमिति संज्ञा । तदन्त एकै-वाहुतिः । सहस्त्रशीर्षेतिषोडशमन्त्राणां पुरुषसूक्तमिति संज्ञा । तदन्ते-ऽप्येकैवाहुतिः । अद्भ्यः सम्भृत इति षण्णाम्मंत्राणामुत्तरनाराणसूक्त-

मिति संज्ञा । ततोप्येकैवाहुतिः । आशुः शिशानइति द्वादशमन्त्राणामप्रतिरथसूक्तमिति सञ्ज्ञा । तदन्ते सप्तदशमन्त्रान्ते वा एकैवाहुतिः । विभ्राड्बृहत् इति सप्तदशमन्त्राणां सूर्यसूक्तमिति सञ्ज्ञा । तदन्तेप्येकैवाहुतिः । नमस्ते इति षोडशमन्त्राणां सम्पूर्णाध्यायस्य वा रुद्रसूक्तमिति संज्ञा । नमस्त इत्यादिषोडशमन्त्रैः षोडशाहुतयो भवन्ति । नमो-हिरण्यवाहवेसेनान्येदिशाञ्चपतये नमः स्वाहा इत्थमुभयतो नमस्कारैः पञ्चचत्वारिंशदाहुतयः । नमोभवाय च रुद्राय च स्वाहा इत्यादिभिः अन्यतरतो नमस्कारैः पञ्चसप्तत्याहुतयः । नमइषुकृद्भ्यो धनुष्कृद्भ्यश्चवोनमः स्वाहा एकाहुतिः । नमोवः किरिकेभ्योदेवानाठंहृदयेभ्यः नमोविचिन्वत्केभ्योदे० नमोविक्षिणत्केभ्योदे० नमआनिर्हतेभ्योदे० चतस्रआहुतयः । द्रापे० इत्यारभ्यविंशतिकण्डिकाभिर्विंशत्याहुतयः । वयठं-

सोम० १ महच्छिरसाष्टमन्त्रैः एकामाहुतिंजुहुयात् । उग्रश्चेत्यादिमन्त्र-पाठः । व्वाजश्चेति ४ मन्त्रान्तएकाहुतिः । पुनर्नमस्ते० सत्यश्चेति ४ चतुर्णामन्तएकाहुतिः पु० न० ऊर्क्च ४ एकाहुतिः । पु० न० अश्मा-च ३ एकाहुतिः । पु० न० अग्निश्चेति ३ एकाहुतिः । पु० न० अंशुश्च ३ एकाहुतिः । पु० न० अग्निश्च २ एकाहुतिः । पु० न० एकाच० एकाहुतिः । पु० न० चतस्रश्च० एकाहुतिः । पु० न० त्र्यवि-श्च २ एकाहुतिः । पुनर्य्यज्जाग्रतइत्यारभ्यसुषीर्षायेत्यन्तंपूर्ववन्नमस्ते० हुत्वाव्वाजायस्वाहा०२ एकाहुतिः । ऋचंव्वाचमितिचतुर्विंशतिमन्त्राणां-शान्तिसूक्तमितिसंज्ञा । चतुर्व्विंशत्याहुतयो भवन्ति । सद्योजातमि-त्यादि । पूर्ववन्न्यासाः । इमारुद्राय० इति समर्पणम् । करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वापराधम् ॥ विहितम-

विहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो ॥१॥

शिवस्य होमे विशिष्टं ध्यानं कुर्यात् । तद्यथा । पञ्चास्यं सौम्यमात्मानं सर्वाभरणभूषितम् ॥ मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम् ॥ १ ॥ फणासहस्रविस्फूर्जद्दुरगेन्द्रोपवीतिनम् ॥ सप्तार्चिर्विज्वलज्ज्वालजटाजूटकिरीटिनम् ॥ २ ॥ सहस्रकरविभ्राजत्खट्वाङ्गादिविभूषितम् ॥ ब्रह्माण्डखण्डवत्काशकपालवरधारिणम् ॥ ३ ॥ देदीप्यमानं चंद्रार्कज्वलदग्नित्रिनेत्रिणम् ॥ त्रैलोक्यद्योतिकृद्भास्वत्स्कन्धे कापालमालिनम् ॥ ४ ॥ दीप्तनक्षत्रमालावदक्षमालाधरं द्विजम् ॥ निः शेषवारिसम्पूर्णकमण्डलुकरं त्वजम् ॥ ५ ॥ जगदाधारकृन्नादमुञ्चन्डमरुधारिणम् ॥ केयूरबद्धनागेन्द्रमूर्ध्वम्मणिविराजितम् ॥ ६ ॥ मेखलाकिङ्किणीमालामुक्तामालविराजितम् ॥ घर्घराव्यक्तनिर्गच्छद्गम्भीराराववनूपुरम्

॥ ७ ॥ व्याघ्रचर्मपरीधानं व्याघ्रचर्मोत्तरीयकम् ॥ विद्युल्लताप्रभागङ्गाभान्तमूर्ध्वं सुरार्चितम् ॥ ८ ॥ समस्तभुवनाधारधरणोच्चासनस्थितम् ॥ त्रैलोक्यवनितामूर्ध्वनतदेहार्धपार्वती ॥ ९ ॥ लक्षसूर्यप्रभाभासत्रैलोक्यकृतपाण्डुरम् ॥ अमृतप्लुतहृष्टाङ्गं दिव्यभोगसमाकुलम् ॥१०॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ॥ नित्यं शाश्वतमव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥ ११ ॥ द्विजो ध्यात्वैवमात्मानं सम्यग्रुद्रस्वरूपिणम् ॥ सम्प्रध्वस्तान्तरायः सन् ततो यजनमारभेत् ॥ १२ ॥ आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः ॥ आराधयामि भक्त्या त्वां त्वङ्गतिः परमेश्वर ॥ १३ ॥ इति ध्यानम् ।

## अथ भस्मरुद्राक्षधारणम् ।

ॐ सद्योजातमित्यादिपञ्चमन्त्रान्पठित्वा भस्मग्रहणम् । वामहस्ते

निधाय दक्षिणेनाच्छाद्याभिमन्त्रणम् । ॐ अग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म वायुरिति भस्म व्योमेति भस्म सर्व्वंहवा इदम्भस्म मनऽइत्येतानिचक्षूंषि भस्मानि तस्मादव्रतमेतत्पाशुपतं यद्भस्मनांगानि-संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतम्पशुपाशविमोक्षाय । इति त्रिः पठित्वा ॐ आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् इति तस्मिन्जलमासिच्य ॐ नमः शिवायेति सम्मर्दनम् । ईशानः सर्व विद्यानाम्० शिरस्यनुलिंपेत् । तत्पुरुषाय० मुखे । अघोरेभ्यः० हृदये । वामदेवाय० गुह्ये । सद्योजातं० पादयोः । प्रणवेन सर्वाङ्गेषु । त्र्यम्बकंयजामहे० त्र्यायुषञ्ज-मदग्नेः० इति त्रिपुण्ड्रधारणं शिरसि नासिकायां स्कन्धयोर्व्वक्षसि च । इति भस्म धारणम् । ततोरुद्राक्षमालां गृहीत्वाध्यानम् । हृत्पुण्ड-रीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकम् ॥ तथादिमध्यान्त

विहीनमेकं विभुञ्चिदानन्दमरूपमद्भुतम् ॥ उमासहायं परमेश्वरंप्रभुं त्रिलो
चनं नीलकण्ठं प्रशान्तम् ॥ बृहज्जाबालोपनिषदि । त्र्यम्बकंयजामहे० पड-
क्षरेण वा मन्त्रेणधारयेत् । रुद्राक्षान्कण्ठदेशे दशन ३२ परिमितान्मस्तके
विंशतीद्वे ४० षट् ६ षट् ६ कर्णप्रदेशे करयुगलकृतेद्वादश द्वादशैव
१२ ॥ बाह्वोरिन्दोः कलाभि १६ र्नयनयुगकृते ह्येकमेकं १ शिखायां
वक्ष्यस्यष्टाधिकं यः कलयति सततं सस्वयन्नीलकण्ठः ॥१॥ तत्फलम् ।
रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् ॥ महाव्रतमिदम्प्राहुर्मुनयस्तत्व-
दर्शिनः ॥ २ ॥ सहस्रं धारयेद्यस्तु रुद्राक्षाणान्धृतव्रतः ॥ तं नमन्ति-
सुराः सर्वे यथा रुद्रस्तथैव सः ॥ ३ ॥ यो धारयतिरुद्राक्षान्रुद्रवत्सोऽपि
पूज्यते ॥ मुक्ताप्रवालस्फटिक रौप्यवैडूर्यकाञ्चनैः ॥ ४ ॥ समेतान्धार-
येद्यस्तुरुद्राक्षान्सशिवोभवेत् ॥ केवलान्वापिरुद्राक्षान्यथालाभं बिभर्ति

यः ॥ ५ ॥ तं न स्पृशन्तिपापानि तमांसीव विभावसुम् ॥ इति रुद्राक्षधारणम् ॥

वहिःपतितं हविः जले प्रक्षेपणीयम्। ऋत्विजांजुहतां वन्हौ बहिः पतति यद्धविः ॥ तदेववारुणंविद्यात्प्रक्षेप्यंविमलेजले। उत्तरपूजां कर्पूरार्तिकं प्रदक्षिणां च विधिना कृत्वा दक्षिणासङ्कल्पं कुर्यात्। ततः साष्टांगप्रणाममन्त्रः। ॐ नमः सर्वहितार्थाय जगदाधारहेतवे ॥ साष्टांगोयं प्रणामस्ते प्रयत्नेन मया कृतः ॥ १ ॥ इदं विष्णु० इति प्रणिपत्याग्निसन्निधौ विष्णुयागेरुद्रयागे वा प्रार्थनाङ्कुर्यात् ॥

श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् ॥ तेज आयुष्यमारोग्यं देहि मे हव्यवाहन ॥१॥ काण्डद्वयोपपाद्याय कर्मब्रह्मस्वरूपिणे ॥ स्वर्गापवर्गदात्रे च यज्ञेशाय नमो नमः ॥ २ ॥ अपुत्राः पुत्रिणः सन्तु

पुत्रिणः सन्तु पौत्रिणः ॥ निर्धनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः । ४ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ॥ लोकोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ ५ ॥ सर्वेत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ॥ सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥६॥ पापोहं पापकर्माहं पापात्मा पापसम्भवः ॥ त्राहि मां पुण्डरीकाक्ष सर्वपापहरो भव ॥ ७ ॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ दासोयमिति मां मत्वा क्षमस्व परमेश्वर ॥८॥ आवाहनं न जानामि न जानामि विसर्जनम् ॥ मंत्रपूजां न जानामि त्वं गतिः परमेश्वर ॥ ९ ॥ यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं जपकर्मसु ॥ सर्वं भवतु मेऽच्छिद्रं त्वत्प्रसादाज्जनार्दन ॥ १० ॥ यदक्षरपदभ्रष्टम्मात्रा

हीनं च यद्भवेत् ॥ तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥११॥ अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ॥ विपरीतं तु तत्सर्वं क्षमस्व परमेश्वर ॥ १२ ॥ यस्य स्मृत्या च नामोत्या तपोयज्ञक्रियादिषु ॥ न्यूनं सम्पूर्णतां यातु त्वत्प्रसादान्महेश्वर ॥ १३ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यद् भवेत् ॥ यत्स्तुतोसि मया देव तस्मात्त्वं वरदो भव ॥१४॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥१५॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनंसम्पूर्णतां यातु सद्यो वन्दे तमच्युतम् ॥ १६ ॥

यजमानो हस्तेऽक्षतादीन्गृहीत्वा देशकालौ सङ्कीर्त्य अस्य कर्मणः साङ्गतासिध्यर्थं शास्त्रोक्तां दक्षिणां यथायथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे । अस्य कर्मणः सम्पूर्णतार्थं नानानामगोत्रान् ब्राह्मणा-

न्दीनाननाथांश्चाहं भोजयिष्यामिं । अस्मिन्कर्मणि न्यूनातिरिक्तदोषप-
रिहारार्थं भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृ-
ज्ये । अत्रवाक्षमापनम् । अभिषेको यजमानस्य । आपोहि० मोवः०
तस्माअरम्० । विसर्जनम् । यान्तु देवगणाः सर्वे पूजामादाय पार्थि-
वीम् ॥ इष्टकामसमृध्यर्थं पुनरागमनाय च ॥ १ ॥ गच्छ गच्छ सुर-
श्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥२॥
समुद्रंगच्छस्वाहान्तरिक्षंगच्छस्वाहादेवठंसवितारंगच्छस्वाहामित्रावरुणौ-
गच्छस्वाहा होरात्रेगच्छस्वाहाच्छन्दाॅं सिगच्छस्वाहाद्यावापृथिवीगच्छ-
स्वाहायज्ञंगच्छस्वाहासोमंगच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निंव्वैश्वानरं-
गच्छस्वाहामनोमेहार्दियच्छदिवंतेधूमोगच्छतुस्वर्ज्योतिः पृथिवीम्भस्मना-

पूर्णास्वाहा ॥ १ ॥ यज्ञंयज्ञंगच्छयज्ञपतिङ्गच्छस्वांयोनिंगच्छस्वाहा ॥ एष-
तेयज्ञोयज्ञपतेसहसूक्तवाकःसर्व्ववीरस्तंजुषस्वस्वाहा ॥२॥ ततो यजमान
हस्ते सूत्रवेष्टनम् । येन वद्धो० यदावध्नन्० । ततस्तिलककरणम् ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ तिलकं ते प्रयच्छन्तु इष्टका-
मार्थसिद्धये । युंजंतिब्रध्नमरुषंचरंतंपारितस्थुषः ॥ रोचन्तेरोचनादिवि ।१।
युंजन्त्यस्यकाम्याहरीविपक्षसारथे ॥ शोणाधृष्णूनृवाहसा ॥ २ ॥ तत
आशीर्वादः । हस्ते नारिकेलादीन्गृहीत्वा यजमानाय दद्यात् । पुन-
स्त्वादित्यारुद्राव्वसवःसमिन्धतांपुनर्ब्रह्माणोव्वसुनीथयज्ञैः ॥ घृतेनत्वं-
तन्वंव्वर्धयस्वसत्याःसन्तुयजमानस्यकामाः ॥ १ ॥ दीर्घायुस्तऽओषधे-
खनितायस्मैचत्वाखनाम्यहम् ॥ अथोत्वन्दीर्घायुर्भूत्वाशतवल्शाव्विरोह-

तात् ॥ २ ॥ आऽब्रह्मन्ब्राम्हणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्य ÷ शूरऽ-
इषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्व्वोढानड्वानाशुःसप्तिःपुर-
न्धिरुर्य्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यव्वीरोजायतान्निकामेनि-
कामेनःपर्जन्योव्वर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोन ÷ कल्पता-
म् ॥ ३ ॥ व्विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रदस्मैनरोव्वचं-
सेदधातनयदाशीर्द्दादम्पतीव्वामममश्नुतः ॥ पुमान्पुत्रोजायतेव्विन्दतेव्व-
स्वधाव्विश्वाहारपएधतेगृहे ॥ ४ ॥ श्रीर्व्वर्चस्वमायुष्यमारोग्यमाविधात्प-
वमानं महीयते ॥ धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमा-
युः ॥ ५ ॥ शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरात्मन्ध

ते ॥ ६ ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ १ ॥ स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु ॥ शत्रुक्षयोऽस्तु निजपक्षमहोदयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु ॥ २ ॥ इति ॥



## अभिषेकविचारः ।

“वेदै[४]र्वेदै[४]र्ग्निभि[४]रामै[३]श्च रामै[३]रामै[३]र्द्वि[२]कै[१]कैकम् । द्वौ[२] द्वौ[२] पृथग्भिर्मन्त्रै[८]स्तु नमकाश्चमकाः स्मृताः ॥ वाजश्च[१] सत्यं[२] शुक्[३]चाश्मा[४]चाग्नि[५]रंशु[६]ष् तथाग्निकः[७] ॥ एका[८] चैव चतस्रश्च[९] त्र्य[१०] विर्वाजा[११] इति क्रमः ॥” एवं चमकानेकादशधा विभज्य एकैकभागं नमकेषु संयोज्य पठेद् यत्स “रुद्रः” ॥ तैरेकादशरुद्रैः “लघुरुद्रः” ॥ तैरेकादशगुणः “महारुद्रः” ॥ तैरेकादशावृत्तैः “अतिरुद्रः” । एवं नमकचमकरुद्राभिषेकप्रकारे ‘नमस्ते’इत्यादि षट्षष्टि-(६६) मन्त्रात्मको नमकाध्यायः पठनीयः ॥इति॥

## रुद्रीफलम् ।

रुद्रीसंख्याफलं देवि शृणुष्व वदतो मम ।
एकावृत्त्यादिपाठानां यथावत्कथयामि ते ॥ १ ॥
संकल्पपूर्वं सम्पूज्य न्यासांगेषु सकृत् सकृत् ।
स्नात्वा पञ्चामृतेनैव ध्यानपूर्वं शिवं जपेत् ॥ २ ॥
बालग्रहोपशान्त्यर्थमेकावृत्तिमुदीरयेत् ।
उपसर्गोपशान्त्यर्थं त्रिरावृत्तिं पठेन्नरः ॥ ३ ॥
ग्रहोपशान्त्यै कर्तव्या पञ्चावृत्तिर्वरानने ।
महाभये समुत्पन्ने सप्तावृत्तिमुदीरयेत् ॥ ४ ॥
नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत् ।
राजवश्ये विभूत्यै च रुद्रावृत्तिमुदीरयेत् ॥ ५ ॥

रुद्रैस्त्रिभिः कामसिद्धिर्वैरिहानिश्च जायते ।
शत्रुश्च पञ्चभी रुद्रैस्तथा स्त्री वश्यतामियात् ॥ ६ ॥
सौख्यं स्यात्सप्तभी रुद्रैः शिवमाप्नोति मानवः ।
नवरुद्रैः पुत्रपौत्रधनधान्यसुतान्वितः ॥ ७ ॥
राजभीतिविनाशाय वैरस्योच्चाटनाय च ।
धर्मार्थकाममोक्षाणां साधनाय ततः परम् ॥ ८ ॥
अल्पमृत्युविनाशाय तथारोग्ययशःश्रियै ।
राजवृद्धिप्रदेयाय महारुद्रैकसंख्यया ॥ ९ ॥
त्रिभिश्चैव महारुद्रैरसाध्यसाधनाय च ।
पञ्चभिश्च महारुद्रै राज्यकामः प्रसाध्यते ॥ १० ॥
सप्तभिश्च महारुद्रैः सप्तलोकः प्रसाध्यते ।
नवभिश्च महारुद्रैः पुनर्जन्म न जायते ॥ ११ ॥

अतिरुद्रैकसंख्येन देवत्वं प्राप्नुयान्नरः ।
डाकिन्यादिभये प्राप्ते एकावृत्तिं जपेन्नरः ॥ १२ ॥

भूतप्रेतपिशाचानां भये च गुणवृत्तितः ।
ग्रहदोषदशायाञ्च पञ्चावृत्तिं न संशयः ॥ १३ ॥

ज्वरातिसारदोषादौ वातपित्तकफादिषु ।
सर्वरोगोपशान्त्यर्थं सप्तावृत्तिन्न संशयः ॥ १४ ॥

सर्वार्थसाधनायैव नवावृत्तिं पठेन्नरः ।
असाध्यरोगनाशाय मनोऽभीप्सितकर्मणे ॥ १५ ॥

अल्पमृत्युविनाशाय तथारोग्याय वै पुनः ।
सर्वशान्तिर्भवेत्तत्र रुद्रावृत्त्या न संशयः ॥ १६ ॥

# श्रीरुद्राभिषेकद्रव्यम् ।

लिख्यते च मया द्रव्यमभिषेकात्मकं परम् ।
जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः ॥ १ ॥
दध्ना च पशुकामाय श्रिया इक्षुरसेन च ।
मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा ॥ २ ॥
पुत्रार्थी पुत्रमाप्नोति पयसा चाभिषेचनात् ।
वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना ॥ ३ ॥
सद्यः पुत्रमवाप्नोति पयसा चाभिषेचनात् ।
अन्यच्च–ज्वरप्रकोपशान्त्यर्थं जलधारा शिवप्रिया ॥ ४ ॥
घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम् ।
तदा वंशस्य विस्तारो जायते नात्र संशयः ॥ ५ ॥

प्रमेहरोगशान्त्यर्थं प्राप्नुयान्मानसेप्सितम् ।
केवलं दुग्धधारा च तदा कार्या विशेषतः ॥ ६ ॥
शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत् ।
श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शंकरस्य च ॥ ७ ॥
सार्षपेणैव तैलेन शत्रुनाशो भवेदिह ।
मधुना यक्ष्मराजोऽपि गच्छेद्वै शिवपूजनात् ॥ ८ ॥
पापक्षयार्थी मधुना निर्व्याधिः सर्पिषा तथा ।
जीवनार्थी तु पयसा श्रीकामीक्षुरसेन वै ॥ ९ ॥
पुत्रार्थी शर्करायास्तु रसेनार्चेच्छिवं तथा ।
महालिङ्गाभिषेकेण सुप्रीतः शंकरो मुदा ॥ १० ॥
कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितम् ।

अन्यच्च–यजुर्मयो ह्ययं देवो यजुर्भिः शतरुद्रियैः ।
पूजनीयो महारुद्रः सन्ततिश्रेय इच्छता ॥ ११ ॥

अतो यजुर्वेदस्थस्यैव रुद्रस्यातिप्राशस्त्यम् । अस्मिन्समये केचिच्छृङ्गेण रुद्रीं पठित्वा शिवप्रीत्यर्थमभिषेकं कुर्वन्ति । तत्र प्रमाणम्—

शिवं गवयशृङ्गेण केशवं शंखवारिणा ।
विघ्नेशं ताम्रपात्रेण स्वर्णेन जगदम्बिकाम् ॥ १ ॥

औपासनं यदि कृतं हयमेधतुल्यं वासस्त्रिरात्रमिह गांगतटेऽत्रिकल्पः ।
एकेन शृङ्गसलिलेन कृताभिषेको मध्वाज्यदुग्धघटकोटिमितेन तुल्यः ॥२॥

# अथ शिवापराधक्षमापनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥

ध्यायेन्नित्यं गिरीशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥ पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ १ ॥
आदौ कर्मप्रसंगात् कलयति कलुषं मातृकुक्षौ स्थितं मां विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ॥ यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं क्षन्तव्यो मेऽपराधः शिव शिव शिव भो श्रीमहादेव शम्भो ॥ २ ॥ बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासा नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ॥ नानारोगादिदुःखाद्रुदनपरवशः शंकरं न स्मरामि क्षन्तव्यो मे० ॥ ३ ॥ प्रौढोऽहं

यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ दष्टो नष्टो विवेकः सुतधनयुवति-
स्वादुसौख्ये निषण्णः ॥ शैवीचिन्ताविहीनं मम हृदयमहो मानगर्वादिरूढं
क्षन्तव्यो मे० ॥ ४ ॥ वार्द्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदैवाधि-
तापैः पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढिहीनञ्च दीनम् ॥ मिथ्यामोहा-
भिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं क्षन्तव्यो मे० ॥ ५ ॥ नो शक्यं
स्मार्तकर्म प्रतिपदगहनप्रत्यवायाकुलाख्यं श्रौते वार्ता कथं मे द्विजकुल-
विहिते ब्रह्ममार्गेऽसुरारे ॥ ज्ञातो धर्मो विचारैः श्रवणमननयोः किं
निदिध्यासितव्यं क्षन्तव्यो मे० ॥६॥ स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ
नाहृतं गांगतोयं पूजार्थं वा कदाचिद्बहुतरगहनात्खण्डबिल्वीदलानि ॥
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पैस्त्वदर्थं क्षन्तव्यो मे० ॥७॥
दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितं नैव लिंगं नो लिप्तं चन्दनाद्यैः
कनकविरचितैः पूजितं न प्रसूनैः ॥ धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव

भक्ष्योपहारैः क्षन्तव्यो मे० ॥ ८ ॥ ध्यात्वा चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो हव्यं ते लक्षसंख्यैर्हुतवहवदने नार्पितं बीजमन्त्रैः ॥ न तप्तं गांगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः क्षन्तव्यो मे० ॥ ९ ॥ स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुण्डले सूक्ष्ममार्गे शान्ते स्वान्ते प्रलीने प्रकटितविभवे ज्योतिरूपे पराख्ये ॥ लिंगज्ञे ब्रह्मवाक्ये सकलतनुगतं शंकरं न स्मरामि क्षन्तव्यो मे० ॥ १० ॥ नग्नो निःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ॥ उन्मन्याऽवस्थया त्वां विगतकलिमलं शंकरं न स्मरामि क्षन्तव्यो मे० ॥ ११ ॥ चन्द्रोद्भासितशेखरे स्मरहरे गंगाधरे शंकरे सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ॥ दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे मोक्षार्थं कुरु चित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ॥ १२ ॥ किं वाऽनेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं किं वा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन

किम् ॥ ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं मनो दूरतः स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥ १३ ॥ आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ॥ लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवितं तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाऽधुना ॥ १४ ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् ॥ विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ १५ ॥

इति श्रीमच्छङ्कराचार्यविरचितं शिवापराधक्षमापनस्तोत्रम् ।

---

# शिवलिंग पूजन का प्रारम्भ तथा महत्त्व

(लेखक—याज्ञिक सम्राट् पण्डित श्री वेणीराम जी गौड)

शिवलिंग के पूजन के प्रारम्भ होने के सम्बन्ध में पौराणिकी कथा है कि—दक्ष-प्रजापति ने अपने यज्ञ में शिवजी का भाग नहीं रक्खा, जिससे कुपित होकर सती पार्वती ने दक्ष के यज्ञ-मण्डप में योगाग्नि द्वारा अपना शरीर जलाकर प्राण त्याग कर दिया। सती के शरीर के त्याग को जानकर शिवजी अत्यन्त क्रुद्ध हो गये और वे नग्न होकर पृथ्वी में भ्रमण करने लगे। एक दिन वह नग्नावस्था में ही ब्राह्मणों की बस्ती में पहुंच गये। शिवजी के नग्न-स्वरूप को देखकर ब्राह्मणों की स्त्रियां उन पर मोहित हो गईं। स्त्रियों की मोहावस्था देखकर ब्राह्मणों ने शिवजी को शाप दिया कि 'इनका लिंग इनके शरीर से तत्काल गिर जाय।' ब्राह्मणों के शाप के प्रभाव से शिवजी का लिंग उनके शरीर से अलग होकर गिर गया, जिससे तीनों लोकों में घोर उत्पात होने लगा। समस्त देव, ऋषि, मुनि व्याकुल होकर ब्रह्माजी की शरण में गये। ब्रह्मा ने योगबल से शिव-लिंग के अलग होने का कारण जान लिया और वह समस्त देवताओं, ऋषियों और मुनियों को अपने

साथ लेकर शिवजी के पास पहुंचे। ब्रह्मा ने शिवजी से प्रार्थना की कि—'आप अपने लिंग को पुनः धारण कीजिये, अन्यथा तीनों लोक नष्ट हो जायेंगे।' ब्रह्माजी की प्रार्थना सुनकर शिवजी बोले—'आज से सभी लोग मेरे लिंग की पूजा प्रारम्भ कर दें, तो मैं पुनः अपने लिंग को धारण कर लूंगा।' शिवजी की बात सुनकर ब्रह्माजी ने सर्वप्रथम सुवर्ण का शिवलिंग बनाकर उसका पूजन किया। पश्चात् देवताओं, ऋषियों और मुनियों ने अनेक द्रव्यों के शिवलिंग बनाकर पूजन किया। तभी से शिवलिंग के पूजन का प्रारम्भ हुआ।

जो मनुष्य किसी तीर्थ में तीर्थ की मृत्तिका से शिवलिङ्ग बनाकर उनका हजार बार अथवा लाख बार अथवा करोड़ बार सविधि पूजन करता है, वह शिवस्वरूप हो जाता है। जो मनुष्य तीर्थ में मिट्टी, भस्म, गोबर अथवा बालू का शिवलिङ्ग बनाकर एक बार भी उसका सविधि पूजन करता है, वह दस हजार कल्प तक स्वर्ग में निवास करता है।

शिवलिङ्ग का सविधि पूजन करने से मनुष्य सन्तान, धन, धान्य, विद्या, ज्ञान, सद्बुद्धि, दीर्घायु और मोक्ष की प्राप्ति करता है।

जिस स्थान पर शिवलिङ्ग का पूजन होता है, वह तीर्थ न होने पर भी तीर्थ बन जाता

है। जिस स्थान पर सर्वदा शिवलिङ्ग का पूजन होता है, उस स्थान पर जिस मनुष्य की मृत्यु होती है, वह शिवलोक को प्राप्त करता है। जो मनुष्य 'शिव, शिव, शिव' इस प्रकार सर्वदा कहता रहता है, वह परम पवित्र और परम श्रेष्ठ हो जाता है और वह धर्म, अर्थ, काम एवं मोक्ष की प्राप्ति करता है। 'शिव' शब्द के उच्चारण मात्र से मनुष्य के समस्त प्रकार के पापों का नाश हो जाता है। अतः जो मनुष्य 'शिव, शिव' का उच्चारण करते हुए प्राणत्याग करता है, वह अपने करोड़ों जन्म के पापों से मुक्त होकर 'शिवलोक' को प्राप्त करता है।

'शिव' शब्द का अर्थ 'कल्याण' है। अतः जिसकी जिह्वा पर अहर्निश कल्याणप्रद शिव का नाम रहता है, उस का बाह्य और आभ्यन्तर शुद्ध हो जाता है और वह शिवसायुज्य प्राप्त करता है।

'शिव' यह दो अक्षरों वाला नाम ही परब्रह्मस्वरूप एवं तारक है, इससे भिन्न और कोई दूसरा तारक ब्रह्म नहीं है—

**तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम् ।**
**नैतस्मादपरं किंचित तारकं ब्रह्म सर्वथा ॥**

**(शिवरहस्य, सप्तमांश अ० २३)**

॥ ॐ ॥

श्री पुष्पदन्त विरचित

# शिवमहिम्नःस्तोत्रम्

महिम्नः पारं ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन् ममाप्येष स्तोत्रे हर निरपवादः परिकरः ।१

अतीतः पन्थानं तव च महिमा वांगमनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः पदेत्ववर्वाचीनेपतति न मनः कस्यनवचः।२

मधुस्फीता वाचः परमममृतं निर्मितवतस्तवब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतःपुनामीत्यर्थेऽस्मिन् पुरमथनबुद्धिर्व्यवसिता ।३

तवैश्वर्यं यत् तज्जगदुदयरक्षाप्रलयकृत् त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन् वरद रमणीयामरमणीं विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः।४
किमीहः किं कायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादानइतिच
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः।५
अजन्मानो लोकाः किमवयववन्तोऽपि जगतामधिष्ठातारं किं भवविधिरनादृत्यभवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ।६
त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थानेपरमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति च भवद्भ्रूप्रणिहितां न हि स्वात्मारामंविषयमृगतृष्णाभ्रमयति।८
ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदंपरोध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।

समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव स्तुवंजिह्रेमि त्वां न खलु ननु धृष्टामुखरता॥९
तवैश्वर्यं यत्नाद् यदुपरि विरंचिर्हरिरधः परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः।
ततो भक्तिश्रद्धाभरगुरु गृणद्भ्यां गिरिशयत् स्वयं तस्थेताभ्यां तव किमनुवृत्तिर्नफलति १०
अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद् बाहूनभृत रणकण्डूपरवशान्।
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम्।११
अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसिप्रतिष्ठात्वय्यासीद् ध्रुवमुपचितो मुह्यतिखलः १२
यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीमधश्चक्रे बाणः परिजनविधेयत्रिभुवनः।
न तच्चित्रं सम्यग्वरिवसितरित्वच्चरणयोर्न कस्याप्युन्नत्यैभवति शिरसस्त्वय्यवनतिः।१३
अकाण्डब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्यासीद् यस्त्रिनयनविषं संहृतवतः।
स कल्माषः कंठे तव न कुरुते नश्रियमहो विकारोऽपिश्लाघ्यो भुवनभयभङ्गव्यसनिनः १४

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे निवर्तन्तेनित्यंजगति जयिनोयस्यविशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत् स्मरःस्मर्तव्यात्मा नहिवशिषुपथ्यःपरिभवः।। १५

मही पादाघाताद् व्रजति सहसा संशयपदं पदं विष्णोर्भ्राम्यद् भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ।। १६

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यःपृषतलघुदृष्टः शिरसि ते ।
जगद् द्वीपाकारं जलधिवलयं तेन कृतमित्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ।। १७

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथांगे चन्द्रार्कौरथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयंत्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीडन्त्यो न खलुपरतन्त्राःप्रभुधियः।। १८

हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्तिजगताम् ।। १९

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।

अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धांबद्ध्वाकृतपरिकरः कर्मसुजनः ॥२०

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।
क्रतुभ्रंशस्त्वत्तःक्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचारायहि मखाः ॥२१

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तंतेऽद्यापित्यजति न मृगव्याधरभसः ॥२२

स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत् पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि ।
यदि स्त्रैणं देवी यमनिरत देहार्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥२३

श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥२४

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये दधत्यन्तस्तत्त्वंकिमपि यमिनस्तत् किल भवान् २५

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि २६
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिःसमस्तं व्यस्तं त्वांशरणद गृणात्योमिति पदम् २७
भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां स्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रविहितनमस्योऽस्मिभवते २८
नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्वस्मै ते तदिदमिति सर्वाय च नमः ॥२९
बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमोनमः
कृशपरिणति चेतः क्लेशवश्यं क्व चेदं क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः ।

इति चकितममन्दीकृत्य मां भक्तिराधाद् वरद चरणयोस्ते वाक्यपुष्पोपहाराम् ॥३१

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति ॥३२

असुरसुरमुनीन्द्रै रर्चितस्येन्दुमौले ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य।
सकलगणवरिष्ठः पुष्पदन्ताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥३३

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत् पठति परमभक्त्या शुद्धचित्तः पुमान् यः।
स भवति शिवलोके रुद्रतुल्यस्तथात्र प्रचुरतरधनायुः पुत्रवान् कीर्तिमांश्च ॥३४

महेशान्नापरो देवो महिम्नो नापरा स्तुतिःअघोरान्नापरो मंत्रो नास्ति तत्त्वं गुरोःपरम्३५

दीक्षादानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाःमहिम्नःस्तवपाठस्य कलां नार्हन्तिषोडशीम्३६

कुसुमदशननामा सर्वगन्धर्वराजः शिशुशशिधरमौलेर्देवदेवस्य दासः।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात् स्तवनमिदमकार्षीद् दिव्यदिव्यं महिम्नः।३७

सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३८
आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम् अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ॥३९
इत्येषा वाङ्मयी पूजा श्रीमच्छंकरपादयोः अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥४०
तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर यादृशोऽसि महादेव तादृशाय नमो नमः ४१
एककालं द्विकालं वा त्रिकालं यः पठेन्नरः सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥४२
श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण।
कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्महेशः ॥४३

॥ शिवमहिम्नःस्तोत्र सम्पूर्णम्॥



॥ श्रीः ॥

# अथ रुद्रयागहवनमन्त्राः

## एकषष्ट्युत्तरशतधाविभागपक्षमाश्रित्य

## रुद्रस्वाहाकारविधिः

ॐ गणानान्त्वा० स्वाहा ।

ॐ अम्बेऽ अम्बिके० स्वाहा । इति हुत्वा,

ॐ यज्जाग्रतः० ( ६ मन्त्राः ) स्वाहा ।

ॐ सहस्रशीर्षा० ( १६ मन्त्राः ) स्वाहा ।

ॐ अद्भ्यः सम्भृतः० ( ६ मन्त्राः ) स्वाहा ।

ॐ आशुः शिशानः० ( १२ मन्त्राः ) स्वाहा ।

ॐ विभ्राड् बृहत्पिबतु० ( १७ मन्त्राः ) स्वाहा ।

ॐ भूः, ॐ भुवः, ॐ स्वः, ॐ नमस्ते रुद्र मन्न्यवऽ उतो तऽ इषवे नमः । बाहुब्भ्यामुत ते नमः स्वाहा ॥ १ ॥

ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा ॥ २ ॥

ॐ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवाङ्गिरित्रताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् स्वाहा ॥ ३ ॥

ॐ शिवेन व्वचसा त्वा गिरिशाच्छा व्वदामसि। यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमनाऽ असत् स्वाहा ॥ ४ ॥

ॐ अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्व्यो भिषक्। अहींश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्न्योऽधराचीः परासुव स्वाहा ॥ ५ ॥

ॐ असौ यस्ताम्म्रोऽ अरुण ऽउत बब्भ्रुः सुमङ्गलः। ये चैनꣳ रुद्राऽ अभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेडऽ ईमहे स्वाहा ॥ ६ ॥

ॐ असौ योऽवसर्प्पति नीलग्ग्रीवो व्विलोहितः। उतैनङ्गोपाऽ अदृश्श्रन्नदृश्श्रन्नुदहार्य्यः स दृष्टो मृडयाति नः स्वाहा ॥ ७ ॥

ॐ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे। अथो येऽ अस्य सत्त्वानो हन्तेब्भ्योऽकरन्नमः स्वाहा ॥ ८ ॥

ॐ प्रमुञ्च धन्न्वनस्त्वमुभयोरात्क्न्योर्ज्ज्याम्। याश्च ते हस्तऽ इषवः परा ता भगवो व्वप स्वाहा ॥ ९ ॥

ॐ व्विज्ज्यन्धनुः कपर्द्दिनो विशल्ल्यो बाणवाँ२ऽ उत। अनेशन्नस्य याऽ इषवऽ आभुरस्य निषङ्गधिः स्वाहा ॥ १० ॥

ॐ या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः। तयास्म्मान्न्विश्श्वतस्त्व-मयक्ष्मया परिभुज स्वाहा ॥ ११ ॥

ॐ परि ते धन्न्वनो हेतिरस्मान्न्वृणक्तु व्विश्श्वतः। अथो यऽ इषुधिस्त-वारेऽ अस्मन्निधेहि तम् स्वाहा ॥ १२ ॥

ॐ अवतत्त्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे। निशीर्य्य शल्ल्यानां मुखा शिवो नः सुमना भव स्वाहा ॥ १३ ॥

ॐ नमस्तऽ आयुधायानातताय धृष्णवे। उभाब्भ्यामुत ते नमो बाहु-ब्भ्यान्तव धन्न्वने स्वाहा ॥ १४ ॥

ॐ मा नो महान्तमुत मा नोऽ अर्ब्भकम्मा नऽ उक्षन्तमुत मा नऽ उक्षि-

तम्। मा नो व्वधीः पितरम्मोत मातरम्मा नः प्प्रियास्तन्न्वो रुद्द्र रीरिषः स्वाहा ॥ १५ ॥

ॐ मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽ अश्श्वेषु रीरिषः। मा नो व्वीरान् रुद्द्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे स्वाहा ॥१६॥

ॐनमो हिरण्ण्यबाहवे सेनान्न्ये दिशाञ्च पतये नमः स्वाहा ॥ १७ ॥

ॐनमो व्वृक्षेब्भ्यो हरिकेशेब्भ्यः पशूनाम्पतये नमः स्वाहा ॥ १८ ॥

ॐनमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमः स्वाहा ॥ १९ ॥

ॐनमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः स्वाहा ॥ २० ॥

ॐनमो बब्भ्लुशाय व्याधिनेन्नानाम्पतये नमः स्वाहा ॥ २१ ॥

ॐनमो भवस्य हेत्त्यै जगताम्पतये नमः स्वाहा ॥ २२ ॥

ॐनमो रुद्द्रायाततायिने क्षेत्त्राणाम्पतये नमः स्वाहा ॥ २३ ॥

ॐनमः सूतायाहन्त्यै व्वनानाम्पतये नमः स्वाहा ॥ २४ ॥

ॐनमो रोहिताय स्त्थपतये व्वृक्षाणाम्पतये नमः स्वाहा ॥ २५ ॥

ॐ नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमः स्वाहा ॥ २६ ॥

ॐ नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमः स्वाहा ॥ २७ ॥

ॐ नमऽ उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमः स्वाहा ॥ २८ ॥

ॐ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमः स्वाहा ॥ २९ ॥

ॐ नमः सहमानाय निव्याधिनऽ आव्याधिनीनाम्पतये नमः स्वाहा ॥३०॥

ॐ नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमः स्वाहा ॥ ३१ ॥

ॐ नमो निचेरवे परिचरायारण्यानाम्पतये नमः स्वाहा ॥ ३२ ॥

ॐ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमः स्वाहा ॥ ३३ ॥

ॐ नमो निषङ्गिणऽ इषुधिमते तस्कराणाम्पतये नमः स्वाहा ॥ ३४ ॥

ॐ नमः सृकायिभ्यो जिघाᳬंसद्भ्यो मुष्णताम्पतये नमः स्वाहा ॥३५॥

ॐ नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः स्वाहा ॥३६॥

ॐ नमऽ उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमः स्वाहा ॥ ३७ ॥

ॐ नमऽ इषुमद्भ्यो धन्वायिभ्यश्च वो नमः स्वाहा ॥ ३८ ॥

ॐ नमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः स्वाहा ॥ ३९ ॥
ॐ नमऽ आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः स्वाहा ॥ ४० ॥
ॐ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमः स्वाहा ॥ ४१ ॥
ॐ नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः स्वाहा ॥ ४२ ॥
ॐ नमः शयानेभ्यऽ आसीनेभ्यश्च वो नमः स्वाहा ॥ ४३ ॥
ॐ नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः स्वाहा ॥ ४४ ॥
ॐ नमः सभाभ्यः सभापतिभ्यश्च वो नमः स्वाहा ॥ ४५ ॥
ॐ नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः स्वाहा ॥ ४६ ॥
ॐ नमऽ आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः स्वाहा ॥ ४७ ॥
ॐ नमऽ उगणाभ्यस्तृꣳहतीभ्यश्च वो नमः स्वाहा ॥ ४८ ॥
ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमः स्वाहा ॥ ४९ ॥
ॐ नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः स्वाहा ॥ ५० ॥
ॐ नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः स्वाहा ॥ ५१ ॥

ॐनमो त्रिवरूपेभ्यो विश्वरूपेभ्यश्च वो नमः स्वाहा ॥ ५२ ॥
ॐनमः सेनाभ्यः सेनानिभ्यश्च वो नमः स्वाहा ॥ ५३ ॥
ॐनमो रथिभ्योऽ अरथेभ्यश्च वो नमः स्वाहा ॥ ५४ ॥
ॐनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमः स्वाहा ॥ ५५ ॥
ॐनमो महद्भ्योऽ अर्भकेभ्यश्च वो नमः स्वाहा ॥ ५६ ॥
ॐनमस्तक्षभ्यो रथकारेभ्यश्च वो नमः स्वाहा ॥ ५७ ॥
ॐनमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमः स्वाहा ॥ ५८ ॥
ॐनमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः स्वाहा ॥ ५९ ॥
ॐनमः श्वनिभ्यो मृगयुभ्यश्च वो नमः स्वाहा ॥ ६० ॥
ॐनमः श्वभ्यः श्वपतिभ्यश्च वो नमः स्वाहा ॥ ६१ ॥
ॐनमो भवाय च रुद्राय च स्वाहा ॥ ६२ ॥
ॐनमः शर्व्वाय च पशुपतये च स्वाहा ॥ ६३ ॥
ॐनमो नीलग्रीवाय च शितिकण्ठाय च स्वाहा ॥ ६४ ॥

ॐ नमः कपर्दिने च व्युप्तकेशाय च स्वाहा ॥ ६५ ॥

ॐ नमः सहस्राक्षाय च शतधन्वने च स्वाहा ॥ ६६ ॥

ॐ नमो गिरिशयाय च शिपिविष्टाय च स्वाहा ॥ ६७ ॥

ॐ नमो मीढुष्टमाय चेषुमते च स्वाहा ॥ ६८ ॥

ॐ नमो ह्रस्वाय च वामनाय च स्वाहा ॥ ६९ ॥

ॐ नमो बृहते च वर्षीयसे च स्वाहा ॥ ७० ॥

ॐ नमो वृद्धाय च सवृधे च स्वाहा ॥ ७१ ॥

ॐ नमोऽग्र्याय च प्रथमाय च स्वाहा ॥ ७२ ॥

ॐ नमऽ आशवे चाजिराय च स्वाहा ॥ ७३ ॥

ॐ नमः शीघ्र्याय च शीभ्याय च स्वाहा ॥ ७४ ॥

ॐ नमऽ ऊर्म्याय चावस्वन्याय च स्वाहा ॥ ७५ ॥

ॐ नमो नादेयाय च द्वीप्याय च स्वाहा ॥ ७६ ॥

ॐ नमो ज्येष्ठाय च कनिष्ठाय च स्वाहा ॥ ७७ ॥

ॐनमः पूर्व्वजाय चापरजाय च स्वाहा ॥ ७८ ॥

ॐनमो मद्ध्यमाय चापगल्भाय च स्वाहा ॥ ७९ ॥

ॐनमो जघन्न्याय च बुद्ध्न्याय च स्वाहा ॥ ८० ॥

ॐनमः सोब्भ्याय च प्प्रतिसर्य्याय च स्वाहा ॥ ८१ ॥

ॐनमो याम्म्याय च क्षेम्म्याय च स्वाहा ॥ ८२ ॥

ॐनमः श्श्लोक्क्याय चावसान्न्याय च स्वाहा ॥ ८३ ॥

ॐनमऽ उर्व्वर्य्याय च खल्ल्याय च स्वाहा ॥ ८४ ॥

ॐनमो व्वन्न्याय च कक्क्ष्याय च स्वाहा ॥ ८५ ॥

ॐनमः श्श्रवाय च प्प्रतिश्श्रवाय च स्वाहा ॥ ८६ ॥

ॐनमऽ आशुषेणाय चाशुरथाय च स्वाहा ॥ ८७ ॥

ॐनमः शूराय चावभेदिने च स्वाहा ॥ ८८ ॥

ॐनमो बिल्मिने च कवचिने च स्वाहा ॥ ८९ ॥

ॐनमो व्वर्म्मिणे च व्वरूथिने च स्वाहा ॥ ९० ॥

ॐनमः स्स्रुताय च स्स्रुतसेनाय च स्वाहा ॥ ९१ ॥
ॐनमो दुन्दुभ्याय चाहनन्याय च स्वाहा ॥ ९२ ॥
ॐनमो धृष्णवे च प्रमृशाय च स्वाहा ॥ ९३ ॥
ॐनमो निषङ्गिणे चेषुधिमते च स्वाहा ॥ ९४ ॥
ॐनमस्तीक्ष्णेषवे चायुधिने च स्वाहा ॥ ९५ ॥
ॐनमः स्वायुधाय च सुधन्वने च स्वाहा ॥ ९६ ॥
ॐनमः स्रुत्याय च पथ्याय च स्वाहा ॥ ९७ ॥
ॐनमः काट्याय च नीप्याय च स्वाहा ॥ ९८ ॥
ॐनमः कुल्याय च सरस्याय च स्वाहा ॥ ९९ ॥
ॐनमो नादेयाय च वैशन्ताय च स्वाहा ॥ १०० ॥
ॐनमः कूप्याय चावट्याय च स्वाहा ॥ १०१ ॥
ॐनमो वीध्र्याय चातप्याय च स्वाहा ॥ १०२ ॥
ॐनमो मेघ्याय च विद्युत्याय च स्वाहा ॥ १०३ ॥

ॐनमो व्वर्ष्याय चावर्ष्याय च स्वाहा ॥ १०४ ॥

ॐनमो व्वात्याय च रेष्म्याय च स्वाहा ॥ १०५ ॥

ॐनमो व्वास्तव्याय च व्वास्तुपाय च स्वाहा ॥ १०६ ॥

ॐनमः सोमाय च रुद्राय च स्वाहा ॥ १०७ ॥

ॐनमस्ताम्राय चारुणाय च स्वाहा ॥ १०८ ॥

ॐनमः शङ्गवे च पशुपतये च स्वाहा ॥ १०९ ॥

ॐनमऽ उग्राय च भीमाय च स्वाहा ॥ ११० ॥

ॐनमोऽग्रेवधाय च दूरेवधाय च स्वाहा ॥ १११ ॥

ॐनमो हन्त्रे च हनीयसे च स्वाहा ॥ ११२ ॥

ॐनमो व्वृक्षेभ्यो हरिकेशेभ्यः स्वाहा ॥ ११३ ॥

ॐनमस्ताराय स्वाहा ॥ ११४ ॥

ॐनमः शम्भवाय च मयोभवाय च स्वाहा ॥ ११५ ॥

ॐनमः शङ्कराय च मयस्कराय च स्वाहा ॥ ११६ ॥

ॐ नमः शिवाय च शिवतराय च स्वाहा ॥ ११७ ॥

ॐ नमः पार्य्याय चावार्य्याय च स्वाहा ॥ ११८ ॥

ॐ नमः प्रतरणाय चोत्तरणाय च स्वाहा ॥ ११९ ॥

ॐ नमस्तीर्त्थ्याय च कूल्ल्याय च स्वाहा ॥ १२० ॥

ॐ नमः शष्प्याय च फेन्न्याय च स्वाहा ॥ १२१ ॥

ॐ नमः सिकत्याय च प्रवाह्याय च स्वाहा ॥ १२२ ॥

ॐ नमः किंशिलाय च क्षयणाय च स्वाहा ॥ १२३ ॥

ॐ नमः कपर्द्दिने च पुलस्तये च स्वाहा ॥ १२४ ॥

ॐ नमऽ इरिण्ण्याय च प्रपत्थ्याय च स्वाहा ॥ १२५ ॥

ॐ नमो व्व्रज्ज्याय च गोष्ठ्याय च स्वाहा ॥ १२६ ॥

ॐ नमस्तल्प्याय च गेह्याय च स्वाहा ॥ १२७ ॥

ॐ नमो हृदय्याय च निवेष्प्याय च स्वाहा ॥ १२८ ॥

ॐ नमः काट्याय च गह्वरेष्ठाय च स्वाहा ॥ १२९ ॥

ॐ नमः शुष्क्क्याय च हरित्त्याय च स्वाहा ॥ १३० ॥
ॐ नमः पाᳫँसव्व्याय च रजस्याय च स्वाहा ॥ १३१ ॥
ॐ नमो लोप्प्याय चोलप्प्याय च स्वाहा ॥ १३२ ॥
ॐ नमऽ ऊर्व्व्याय च सूर्व्व्याय च स्वाहा ॥ १३३ ॥
ॐ नमः पर्ण्णाय च पर्ण्णशदाय च स्वाहा ॥ १३४ ॥
ॐ नमऽ उद्गुरमाणाय चाभिघ्घ्नते च स्वाहा ॥ १३५ ॥
ॐ नमऽ आखिदते च प्प्रखिदते च स्वाहा ॥ १३६ ॥
ॐ नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः स्वाहा ॥ १३७ ॥
ॐ नमो वः किरिकेब्भ्यो देवानाᳫँ हृदयेब्भ्यः स्वाहा ॥ १३८ ॥
ॐ नमो व्विचिन्न्वत्केब्भ्यो देवानाᳫँ हृदयेब्भ्यः स्वाहा ॥ १३९ ॥
ॐ नमो व्विक्षिणत्केब्भ्यो देवानाᳫँ हृदयेब्भ्यः स्वाहा ॥ १४० ॥
ॐ नमऽ आनिर्हतेब्भ्यो देवानाᳫँ हृदयेब्भ्यः स्वाहा ॥ १४१ ॥
ॐ द्द्रापेऽ अन्धसस्प्पते दरिद्र नीललोहित । आसाम्प्रजाना-

मेषाम्पशूनाम्मा भेर्म्मा रोङ् मो च नः किञ्चनाममत् स्वाहा ॥ १४२ ॥

ॐ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्प्रभरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्ष्पदे व्विश्श्वम्पुष्टं ग्रामेऽ
अस्मिन्ननातुरम् स्वाहा ॥ १४३ ॥

ॐ या ते रुद्र शिवा तनूः शिवा व्विश्श्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृढ जीवसे स्वाहा ॥ १४४ ॥

ॐ परि नो रुद्रस्य हेतिर्व्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्ष्व मीड्ढ्वस्तोकाय तनयाय
मृड स्वाहा ॥ १४५ ॥

ॐ मीढुष्टम शिवतम शिवो नः सुमना भव । परमे व्वृक्षऽ आयुध-
न्निधाय कृत्तिं व्वसानऽ आचर पिनाकम्बिब्भ्रदागहि स्वाहा ॥ १४६ ॥

ॐ व्विकिरिद्र व्विलोहित नमस्तेऽ अस्तु भगवः ।
यास्ते सहस्रꣳ हेतयोऽन्न्यमस्म्मन्निवपन्तु ताः स्वाहा ॥ १४७ ॥

ॐ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ।
तासामीशानो भगवः पराचीना मुखा कृधि स्वाहा ॥ १४८ ॥

ॐ असङ्ख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १४९ ॥

ॐ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५० ॥

ॐ नीलग्रीवाः शितिकण्ठाः दिवꣳ रुद्रा उपश्रिताः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५१ ॥

ॐ नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५२ ॥

ॐ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५३ ॥

ॐ ये भूतानामधिपतयो विशिखासः कपर्दिनः ।

तेषाᳬं सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५४ ॥

ॐ ये पथाम्पथिरक्षयऽ ऐलबृदाऽ आयुर्य्युधः ।

तेषाᳬं सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५५ ॥

ॐ ये तीर्त्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः ।

तेषाᳬं सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५६ ॥

ॐ येऽन्नेषु व्विविदूध्यन्ति पात्रेषु पिबतो जनान् ।

तेषाᳬं सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५७ ॥

ॐ यऽ एतावन्तश्च भूयाᳬंसश्च दिशो रुद्रा व्वितस्त्थिरे ।

तेषाᳬं सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १५८ ॥

ॐ नमोऽस्तु रुद्रेब्भ्यो ये दिवि येषां व्वर्षमिषवः । तेब्भ्यो दश प्प्राचीर्दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोदूर्ध्वाः । तेब्भ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा ॥ १५९ ॥

ॐ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः स्वाहा ॥ १६० ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः स्वाहा ॥ १६१ ॥

ॐभूः, ॐभुवः, ॐस्वः । ॐवयꣳ सोम० (८ मन्त्राः) [ पाठमात्रम् ] ।

ॐउग्रश्च० ( ७ मन्त्राः ) [ पाठमात्रम् ] ।

ॐवाजश्च० ॥ १ ॥ प्राणश्च० ॥ २ ॥ ओजश्च० ॥ ३ ॥ ज्यैष्ठ्यं च० ॥४॥ स्वाहा ।

२-ॐनमस्ते० ( १६१ आहुतयः ) ।

ॐसत्यश्च० ॥१॥ ऋतश्च० ॥२॥ मन्ता च० ॥३॥ शश्च० ॥४॥ स्वाहा।

३–ॐनमस्ते० ( १६१ आहुतयः )।

ॐऊर्क् च० ॥१॥ रयिश्च० ॥२॥ वित्तश्च० ॥३॥ व्रीहयश्च ॥४॥ स्वाहा।

४–ॐनमस्ते० ( १६१ आहुतयः )।

ॐअश्मा च० ॥ १ ॥ अग्निश्च० ॥ २ ॥ वसु च० ॥ ३ ॥ स्वाहा।

५–ॐनमस्ते० ( १६१ आहुतयः )।

ॐअग्निश्च मऽ इन्द्रश्च० ॥१॥ मित्रश्च० ॥२॥ पृथिवी च० ॥३॥ स्वाहा।

६–ॐनमस्ते० ( १६१ आहुतयः )।

ॐअꣳशु० शुश्च० ॥१॥ आग्रयणश्च० ॥२॥ स्रुचश्च० ॥३॥ स्वाहा।

७–ॐनमस्ते० ( १६१ आहुतयः )।

ॐअग्निश्च० ॥१॥ व्रतश्च० ॥२॥ स्वाहा।

८–ॐनमस्ते० ( १६१ आहुतयः )।

ॐएका च० ॥१॥ स्वाहा।

९–ॐनमस्ते० ( १६१ आहुतयः )।

ॐचतस्रश्च० ॥१॥ स्वाहा।

१०-ॐनमस्ते० ( १६१ आहुतयः )।

ॐयविश्च० ॥१॥ पष्ठवाट् च० ॥२॥ स्वाहा।

( पुनः ) ॐयज्जाग्रतः० ( ६ मन्त्राः ) स्वाहा।

ॐसहस्रशीर्षा० ( १६ मन्त्राः ) स्वाहा।

ॐअद्भ्यः सम्भृतः० ( ६ मन्त्राः ) स्वाहा।

ॐआशुः शिशानः० ( १२ मन्त्राः ) स्वाहा।

ॐविभ्राड् बृहत् पिबतु० ( १७ मन्त्राः ) स्वाहा।

११-ॐनमस्ते० ( १६१ आहुतयः )।

ॐवाजाय स्वाहा० ॥ १ ॥ आयुर्य्यज्ञेन कल्पताम्० ॥ २ ॥ स्वाहा।

ॐऋचं वाचम्० स्वाहा। ॐयन्मे छिद्रम्० स्वाहा।

ॐभूर्भुवः स्वः तत्सवितुः० स्वाहा। ॐकयानश्चित्रः० स्वाहा।

ॐकस्त्वा सत्यो मदानाम्० स्वाहा। ॐअभी षु णः० स्वाहा।

ॐकया त्वन्न ऽ ऊत्याभि० स्वाहा। ॐइन्द्रो व्विश्वस्य० स्वाहा।
ॐशं नो मित्रः शं वरुणः० स्वाहा। ॐशं नो व्वातः पवताᳬं शं नः० स्वाहा।
ॐअहानि शं भवन्तु नः० स्वाहा। ॐशन्नो देवीः० स्वाहा।
ॐस्योना पृथिवि० स्वाहा। ॐआपो हि ष्ठा० स्वाहा।
ॐयो वः शिवतमो रसः० स्वाहा। ॐतस्मा ऽ अरं गमाम वः० स्वाहा।
ॐद्यौः शान्तिः० स्वाहा। ॐदृते दृᳬह मा मित्रस्य मा चक्षुषा० स्वाहा।
ॐदृते दृᳬह मा ज्योक्ते० स्वाहा। ॐनमस्ते हरसे शोचिषे० स्वाहा।
ॐनमस्ते ऽ अस्तु व्विद्युते० स्वाहा। ॐयतो-यतः समीहसे० स्वाहा।
ॐसुमित्रिया न ऽ आपः० स्वाहा। ॐतच्चक्षुर्देवहितम्० स्वाहा।
ॐसद्योजातम्० (५ मन्त्राः) [पाठमात्रम्]।

ततः षडङ्गन्यासं कुर्यादिति।

इति रुद्रयागहवनमन्त्राः।

## ( १ ) अथ [1]रुद्रयागस्य षड्भिः प्रकारैर्हवनमन्त्रविभागस्तत्र एकधाहवनमन्त्रविभागपक्षः प्रथमः ।

ॐ नमस्ते रुद्र मन्यव इत्यारभ्य तमेषाञ्जम्भे दध्मः स्वाहा ॥

इति षट्षष्ठिमन्त्राणामेकाहुतिः ॥ १ ॥

## ( २ ) अथ त्रेधाहवनमन्त्रविभागपक्षः द्वितीयः ।

ॐ नमस्ते रुद्र मन्यव इत्यारभ्य अर्भकेभ्यश्च वो नमः स्वाहा ॥

इति षड्विंशतिमन्त्राणामेकाहुतिः ॥ १ ॥

ॐ नमस्तक्षभ्य इत्यारभ्य सुधन्वने च स्वाहा ॥

इति दशमन्त्राणामेकाहुतिः ॥ २ ॥

---

१ रुद्रयागे सर्वत्र रौद्राध्यायस्यार्षेयादिकं स्मृत्वा 'श्रीमहारुद्रप्रीतये होमे विनियोगः' इति कथनीयम् ।

ॐ नमः स्तुत्यायेत्यारभ्य तमेषाञ्जम्भे दध्मः स्वाहा ॥

इति त्रिंशन्मन्त्राणामेकाहुतिः ॥ ३ ॥

## ( ३ ) अथ षोढा (षड्धा) हवनमन्त्रविभागपक्षस्ततीयः ।

ॐ नमस्ते रुद्र मन्यव इत्यारभ्य अर्भकेभ्यश्च वो नमः स्वाहा ॥

इति षड्विंशतिमन्त्राणामेकाहुतिः ॥ १ ॥

ॐ नमस्तक्षभ्य इत्यारभ्य सुधन्वने च स्वाहा ॥

इति दशमन्त्राणामेकाहुतिः ॥ २ ॥

ॐ नमः स्तुत्यायेत्यारभ्य यऽ एतावन्तश्च० मसि स्वाहा ॥

इति सप्तविंशतिमन्त्राणामेकाहुतिः ॥ ३ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः । तेभ्यो दश प्राची० तमेषाञ्जम्भे दध्मः स्वाहा ॥ ४ ॥

ॐ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात ऽ इषवः । तेभ्यो दश प्राची०
तमेषाञ्जम्भे दध्मः स्वाहा ॥ ५ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राची०
तमेषाञ्जम्भे दध्मः स्वाहा ॥ ६ ॥

## ( ४ ) अथ षोडशधा हवनमन्त्रविभागपक्षश्चतुर्थः ।

ॐ नमस्ते रुद्र मन्यव इत्यारभ्य अर्भकेभ्यश्च वो नमः स्वाहा ॥
इति षड्विंशतिमन्त्राणामेकाहुतिः ॥ १ ॥

ॐ नमस्तक्षभ्य इत्यारभ्य सुधन्वने च स्वाहा ।
इति दशमन्त्राणामेकाहुतिः ॥ २ ॥

ॐ नमः स्रुत्यायेत्यारभ्य पराचीना मुखा कृधि स्वाहा ।
इति सप्तदशमन्त्राणामेकाहुतिः ॥ ३ ॥

ॐ असङ्ख्याता सहस्राणि ये रुद्राऽ अधि भूम्याम् ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ ४ ॥
ॐ अस्मिन्महत्त्यर्णवेऽन्तरिक्षे भवाऽ अधि ।
तेषाᳬ सहस्रयोजऽनेव धन्वानि तन्मसि स्वाहा ॥ ५ ॥
ॐ नीलग्ग्रीवाः शितिकण्ठा दिवᳬ रुद्राऽ उपश्रिताः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ ६ ॥
ॐ नीलग्ग्रीवाः शितिकण्ठाः शर्वाऽ अधः क्षमाचराः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ ७ ॥
ॐ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ ८ ॥
ॐ ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ ९ ॥
ॐ ये पथां पथिरक्षयऽ ऐलबृदाऽ आयुर्युधः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥ १० ॥

ॐ ये तीर्त्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ।

तेषाꣳ सहस्रयोजनेऽव धन्न्वानि तन्न्मसि स्वाहा ॥ ११ ॥

ॐ येऽन्नेषु विविद्ध्यन्ति पात्रेषु पिबतो जनान् ।

तेषाꣳ सहस्रयोजनेऽव धन्न्वानि तन्न्मसि स्वाहा ॥ १२ ॥

ॐ यऽ एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ।

तेषाꣳ सहस्रयोजनेऽव धन्न्वानि तन्न्मसि स्वाहा ॥ १३ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः । तेभ्यो दश प्राचीर्दश० ।

तेभ्यो नमोऽ अस्तु तेनोऽवन्तु तेनो० तमेषां जम्भे दध्मः स्वाहा ॥ १४ ॥

ॐ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वातऽ इषवः । तेभ्यो दश प्राचीर्दश० ।

तेभ्यो नमोऽ अस्तु तेनोऽवन्तु तेनो० तमेषां जम्भे दध्मः स्वाहा ॥ १५ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश० ।

तेभ्यो नमोऽ अस्तु तेनोऽवन्तु तेनो० तमेषां जम्भे दध्मः स्वाहा ॥ १६ ॥

## ( ५ ) अथ चतुश्चत्वारिंशद्धवनमन्त्रविभागपक्षः पञ्चमः ।

ॐ नमस्ते रुद्र मन्यव० मुत ते नमः स्वाहा ॥ १ ॥

ॐ या ते रुद्र शिवा० भि चाकशीहि स्वाहा ॥ २ ॥

ॐ यामिषुङ्गिरिशन्त० पुरुषञ्जगत् स्वाहा ॥ ३ ॥

ॐ शिवेन त्वचसा० सुमनाऽ असत् स्वाहा ॥ ४ ॥

ॐ अद्ध्यवोचदधिवक्ता० परासुव स्वाहा ॥ ५ ॥

ॐ असौ यस्ताम्म्रो० ईमहे स्वाहा ॥ ६ ॥

ॐ असौ योऽवसर्प्पति० उतैनं गोपा० मृडयाति नः स्वाहा ॥ ७ ॥

ॐ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय० तेभ्योऽकरन्नमः स्वाहा ॥ ८ ॥

ॐ प्रमुञ्च धन्न्वनस्त्वमुभयो० भगवो व्वप स्वाहा ॥ ९ ॥

ॐ व्विज्ज्यं धनुः कपर्द्दिनो० निषङ्गधिः स्वाहा ॥ १० ॥

ॐ या ते हेतिर्म्मीढुष्टम हस्ते० परिभुज स्वाहा ॥ ११ ॥

ॐ परि ते धन्वनो हेति० निधेहि तम् स्वाहा ॥ १२ ॥

ॐ अवतत्य धनुष्ट्वꣳ सहस्राक्ष० सुमना भव स्वाहा ॥ १३ ॥

ॐ नमस्तऽ आयुधाया० धन्वने स्वाहा ॥ १४ ॥

ॐ मा नो महान्तमुत० रीरिषः स्वाहा ॥ १५ ॥

ॐ मा नस्तोके० हवामहे स्वाहा ॥ १६ ॥

ॐ नमो हिरण्यबाहवे० स्वाहा । ॐ नमो बभ्लुशाय० । ॐ नमो रोहिताय० स्वाहा । ॐ नमः कृत्स्नायतया० स्वाहा । ॐ नमो व्वश्वते० ञ्विकृन्तानाम्पतये नमः स्वाहा ।

इति पञ्चमन्त्राणामेकाहुतिः ॥ १७ ॥

ॐ नमऽ उष्णीपिणे० स्वाहा । ॐ नमो ञ्विसृजद्भ्यो० स्वाहा । ॐ नमः सभाभ्यः० स्वाहा । ॐ नमो गणेभ्यो० स्वाहा । ॐ नमः सेनाभ्यः० अर्भकेभ्यश्च वो नमः स्वाहा ।

इति पञ्चमन्त्राणामेकाहुतिः ॥ १८ ॥

ॐ नमस्तक्षभ्यो० स्वाहा । ॐ नमः श्वभ्यः० स्वाहा । ॐ नमः कपर्दिने० स्वाहा । ॐ नमो ह्रस्वाय० स्वाहा । ॐ नमऽ आशवे० स्वाहा ।

इति पञ्चमन्त्राणामेकाहुति ॥ १९ ॥

ॐ नमो ज्ज्येष्ठाय० स्वाहा । ॐ नमः सोभ्याय० स्वाहा । ॐ नमो ऽवन्न्याय० स्वाहा । ॐ नमो बिल्मिने० स्वाहा । ॐ नमो धृष्णवे०

इति पञ्चमन्त्राणामेकाहुतिः ॥ २० ॥

ॐ नमः स्रुत्याय० स्वाहा । ॐ नमः कूप्याय० स्वाहा । ॐ नमो ऽवा-त्याय० स्वाहा । ॐ नमः शङ्गवे० नमस्ताराय स्वाहा ।

इति मन्त्रचतुष्टयस्यैकाहुतिः ॥ २१ ॥

ॐ नमः शम्भवाय० शिवतराय च स्वाहा ॥ २२ ॥

ॐ नमः पार्श्याय० स्वाहा । ॐ नमः सिकत्याय० स्वाहा । ॐ नमो ऽव्र-ज्ज्याय० स्वाहा । ॐ नमः शुष्कयाय० स्वाहा । ॐ नमः पर्ण्णाय० आनिर्हतेभ्यः स्वाहा ।

इति पञ्चमन्त्राणामेकाहुतिः ॥ २३ ॥

ॐ नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्न्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽ आनिर्हतेभ्यः स्वाहा ॥ २४ ॥

ॐ द्रापेऽ अन्धसस्पते० किं चनाममत् स्वाहा ॥ २५ ॥

ॐ इमा रुद्राय तवसे० अस्मिन्ननातुरम् स्वाहा ॥ २६ ॥

ॐ या ते रुद्र शिवा तनूः शिवा० मृड जीवसे स्वाहा २७ ॥

ॐ परि नो रुद्रस्य० तनयाय मृड स्वाहा ॥ २८ ॥

ॐ मीढुष्टम शिवतम० बिभ्रदा गहि स्वाहा ॥ २९ ॥

ॐ विकिरिद्र विलोहित० विपन्तु ताः स्वाहा ॥ ३० ॥

ॐ सहस्राणि सहस्रशो० मुखा कृधि स्वाहा ॥ ३१ ॥

ॐ असंख्याता सहस्राणि० तन्मसि स्वाहा ॥ ३२ ॥

ॐ अस्मिन् महत्यर्णवे० तन्मसि स्वाहा ॥ ३३ ॥

ॐ नीलग्ग्रीवाः शितिकण्ठा दिवᳬ० रुद्रा० तन्मसि स्वाहा ॥ ३४ ॥

ॐ नीलग्ग्रीवाः शितिकण्ठाः शर्व्वाऽ अधः० तन्मसि स्वाहा ॥ ३५ ॥

ॐ ये वृक्षेषु० तन्न्मसि स्वाहा ॥ ३६ ॥

ॐ ये भूतानामधिपतयो० तन्न्मसि स्वाहा ॥ ३७ ॥

ॐ ये पथां पथि रक्षयऽ ऐल० तन्न्मसि स्वाहा ॥ ३८ ॥

ॐ ये तीर्थानि० तन्न्मसि स्वाहा ॥ ३९ ॥

ॐ येऽन्नेषु० तन्न्मसि स्वाहा ॥ ४० ॥

ॐ यऽ एतावन्तश्च० तन्न्मसि स्वाहा ॥ ४१ ॥

ॐ नमोऽस्तु रुद्द्रेभ्यो ये दिवि० जम्भे दध्मः स्वाहा ॥ ४२ ॥

ॐ नमोऽस्तु रुद्द्रेभ्यो येऽन्तरिक्षे० जम्भे दध्मः स्वाहा ॥ ४३ ॥

ॐ नमोऽस्तु रुद्द्रेभ्यो ये पृथिव्यां येषामन्न० जम्भे दध्मः स्वाहा ॥ ४४ ॥

## ( ६ ) अथाष्टचत्वारिंशद्धवनमन्त्रविभागपक्षः षष्ठः ।

ॐ नमस्ते रुद्द्र मन्यव० मुतते नमः स्वाहा ॥ १ ॥

ॐ या ते रुद्द्र शिवा० चाकशीहि स्वाहा ॥ २ ॥

ॐ यामिषुङ्गिरिशन्त० पुरुषं जगत् स्वाहा ॥ ३ ॥

ॐ शिवेन व्वचसा त्वा गिरिशाच्छा० सुमनाऽ असत् स्वाहा ॥ ४ ॥

ॐ अध्यवोचदधिवक्ता० परासुव स्वाहा ॥ ५ ॥

ॐ असौ यस्ताम्म्रोऽ अरुणऽ उत० हेडऽ ईमहे स्वाहा ॥ ६ ॥

ॐ असौ योऽवसर्प्पति नीलग्ग्रीवो० मृडयाति नः स्वाहा ॥ ७ ॥

ॐ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे० करन्नमः स्वाहा ॥ ८ ॥

ॐ प्रमुञ्च धन्न्वनस्त्वमुभयोरात्र्योंज्ज्याम्० भगवो व्वप स्वाहा ॥ ९ ॥

ॐ व्विज्ज्यन्धनुः कपर्द्दिनो० निषङ्गधिः स्वाहा ॥ १० ॥

ॐ या ते हेतिर्म्मीढुष्टम हस्ते० परिभुज स्वाहा ॥ ११ ॥

ॐ परि ते धन्न्वनो हेतिरस्मान्न्वृणक्तु० निधेहितं स्वाहा ॥ १२ ॥

ॐ अवतत्य धनुष्ट्वं० सहस्राक्ष शतेषुधे० सुमना भव स्वाहा ॥ १३ ॥

ॐ नमस्तऽ आयुधायाना० तव धन्न्वने स्वाहा ॥ १४ ॥

ॐ मा नो महान्तमुत० रुद्र रीरिषः स्वाहा ॥ १५ ॥

ॐ मा नस्तोके तनये मा नऽ आयुषि० सदमित्त्वा हवामहे स्वाहा ॥ १६ ॥

ॐ नमो हिरण्यबाहवे० स्वाहा। ॐ नमो बभ्लुशाय० स्वाहा। ॐ नमो-रोहिताय० स्वाहा। ॐ नमः कृत्स्नायतया० स्वाहा। ॐ नमो ववश्वते परिवश्वते० क्विकृन्तानां पतये स्वाहा।

इति पञ्चमन्त्राणामेकाहुतिः ॥ १७ ॥

ॐ नमऽ उष्णीषिणे गिरिचराय० स्वाहा। ॐ नमो क्विसृजद्‌भ्यो क्विध्य-द्‌भ्यश्च० स्वाहा। ॐ नमः सभाभ्यः सभा० स्वाहा। ॐ नमो गणेभ्यो गणपतिभ्यश्च० स्वाहा। ॐ नमः सेनाभ्यः सेनानिभ्यश्च० अर्भ-केभ्यश्च वो नमः स्वाहा।

इति पञ्चमन्त्राणामेकाहुतिः ॥ १८ ॥

ॐ नमस्तक्षभ्यो रथकारेभ्यश्च० स्वाहा। ॐ नमः श्वभ्यः श्वपतिभ्यश्च० स्वाहा। ॐ नमः कपर्द्दिने च व्युप्तकेशाय० स्वाहा। ॐ नमो ह्रस्वाय

च व्वामनाय० स्वाहा। ॐ नमऽ आशवे चाजिराय च० द्वीप्याय च स्वाहा।

इति पञ्चमन्त्राणामेकाहुतिः ॥ १९ ॥

ॐ नमो ज्ज्येष्ठाय च कनिष्ठाय च० स्वाहा। ॐ नमः सोभ्याय च प्रति-सर्थ्याय च० स्वाहा। ॐ नमो व्वन्याय च कक्ष्याय च० स्वाहा। ॐ नमो विल्मिने च कवचिने च० स्वाहा। ॐ नमो धृष्णवे च प्प्रमृशाय च० सुधन्न्वने च स्वाहा।

इति पञ्चमन्त्राणामेकाहुतिः ॥ २० ॥

ॐ नमः स्रुत्याय च पत्थ्याय च० स्वाहा। ॐ नमः कूप्याय चावट्याय च० स्वाहा। ॐ नमो व्वात्याय च रेष्म्याय च० स्वाहा। ॐ नमः शङ्गवे च पशुपतये च० हनीयसे च नमो व्वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय स्वाहा।

इति चतुर्मन्त्राणामेकाहुतिः ॥ २१ ॥

ॐ नमः शम्भवाय च० शिवतराय च स्वाहा ॥ २२ ॥

ॐ नमः पार्य्याय चावार्य्याय च० स्वाहा। ॐ नमः सिकत्याय प्रवाह्याय च० स्वाहा। ॐ नमो व्व्रज्ज्याय च गोष्ठ्याय च० स्वाहा। ॐ नमः शुष्क्याय च हरित्याय च० स्वाहा। ॐ नमः पर्ण्णाय च पर्ण्णशदाय च० धनुष्कृद्भ्यश्च वो नमः स्वाहा ॥ २३ ॥

ॐ नमो वः किरिकेभ्यः स्वाहा ॥ २४ ॥

ॐ देवानाᳬ० हृदयेभ्यः स्वाहा ॥ २५ ॥

ॐ नमो व्विचिन्वत्केभ्यः स्वाहा ॥ २६ ॥

ॐ नमो व्विक्षिणत्केभ्यः स्वाहा ॥ २७ ॥

ॐ नमऽ आनिर्हतेभ्यः स्वाहा ॥ २८ ॥

ॐ द्रापेऽ अन्धसस्पते० किञ्चनाममत् स्वाहा ॥ २९ ॥

ॐ इमा रुद्राय तवसे० अस्मिन्ननातुरम् स्वाहा ॥ ३० ॥

ॐ या ते रुद्र शिवा० मृडजीवसे स्वाहा ॥ ३१ ॥

ॐ परि नो रुद्रस्य० तनयाय मृड स्वाहा ॥ ३२ ॥

ॐ मीढुष्टम शिवतम शिवो नः० बिभ्रदा गहि स्वाहा ॥ ३३ ॥

ॐ विकिरिद्र० नि वपन्तु ताः स्वाहा ॥ ३४ ॥

ॐ सहस्राणि सहस्रशो० मुखा कृधि स्वाहा ॥ ३५ ॥

ॐ असंख्याता० धन्वानि तन्मसि स्वाहा ॥ ३६ ॥

ॐ अस्मिन्महत्यर्णवेऽन्तरिक्षे० तन्मसि स्वाहा ॥ ३७ ॥

ॐ नीलग्रीवाः शितिकण्ठा दिवर्ठ० तन्मसि स्वाहा ॥ ३८ ॥

ॐ नीलग्रीवाः शितिकण्ठाः शर्वाऽ० तन्मसि स्वाहा ॥ ३९ ॥

ॐ ये वृक्षेषु शष्पिञ्जरा० तन्मसि स्वाहा ॥ ४० ॥

ॐ ये भूतानामधिपतयो० तन्मसि स्वाहा ॥ ४१ ॥

ॐ ये पथां पथि० जनेऽव धन्वानि तन्मसि स्वाहा ॥ ४२ ॥

ॐ ये तीर्थानि प्रचरन्ति० तन्मसि स्वाहा ॥ ४३ ॥

ॐ येऽन्नेषु विविद्ध्यन्ति० तन्मसि स्वाहा ॥ ४४ ॥

ॐ यऽ एतावन्तश्च भूयाᳬंसश्च० तन्मसि स्वाहा ॥ ४५ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये दिवि० तमेषाञ्जम्भे दध्मः स्वाहा ॥ ४६ ॥

ॐ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे० तमेषाञ्जम्भे दध्मः स्वाहा ॥ ४७ ॥

ॐ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्न० तमेषां जम्भे दध्मः स्वाहा ॥४८॥

॥ इति रुद्रयाग-हवनमन्त्राः ॥



# शिवजी की आरती

जै शिव ओंकारा, हो शिवपार्वती प्यारा, हो शिव ऊपर जलधारा।
ब्रह्मा विष्णु सदाशिव अर्धंङ्गी धारा ॥१॥ ॐ हर हर हर महादेव ॥ टेक ॥

एकानन चतुरानन पञ्चानन राजै। हंसासन गरुड़ासन वृषवाहन साजै ॥२॥ ॐ हर०॥
दोय भुज चार चतुर्भुज दशभुज ते सोहै। तीनों रूप निरखता त्रिभुवनजन मोहै ॥३॥ ॐ हर० ॥
अक्षमाला वनमाला रुण्डमालाधारी। चन्दन मृगमद चन्दा भाले शुभकारी ॥४॥ ॐ हर० ॥
श्वेताम्बर पीताम्बर बाघम्बर अंगे। सनकादिक प्रभुतादिक भूतादिक संगे ॥५॥ ॐ हर० ॥
करमध्ये कमण्डलु चक्र त्रिशूल धरता। जगकर्त्ता जगहर्ता जगपालनकर्त्ता ॥६॥ ॐ हर० ॥
ब्रह्मा विष्णु सदाशिव जानत अविवेका। प्रणव अक्षर ॐ मध्ये ये तीनों एका ॥७॥ ॐ हर० ॥
त्रिगुण स्वामी की आरती जो कोई नर गावै। भणत शिवानन्द स्वामी वांछित फल पावै ॥८॥
॥ ॐ हर० ॥

जै शिव ओंकारा, हो मन भज शिवओंकारा, हो मन रट शिवओंकारा, गल हो शिव रुण्डनमाला, हो शिव ओढ़त मृग छाला, हो शिव पीते भंगप्याला, हो शिव रहते मतवाला, हो शिव पार्वती प्यारा, हो शिव ऊपर जलधारा ॥ ब्रह्मा विष्णु सदाशिव अर्धंङ्गी धारा ॥९॥ ॐ हर हर हर महादेव ॥

# श्री दुर्गासप्तशती

वाराणसी के शीर्षस्थ विद्वान याज्ञिक सम्राट वेणीराम गौड़, वेदाचार्य ने श्री दुर्गासप्तशती के शुद्ध रूप का सरल हिन्दी अनुवाद किया है। बहुत मोटे अक्षरों में छपी पुस्तक के प्रत्येक अध्याय के आरम्भ में पाठ के अनुरुप माँ दुर्गा का चित्र है। इसके अतिरिक्त शतचण्डी, सहस्रचण्डी, अयुतचण्डी, लक्षचण्डी प्रयोग, दुर्गापाठ-हवन, बलिदान तथा प्रत्येक अध्याय के अंत में हवन सामग्री, दुर्गा यंत्र, सप्तशती यत्र, नवार्ण यंत्र, घटार्गल यंत्र तथा अनेक विशेष स्तोत्र भी अनुवाद सहित दिये गये है। मूल पाठ करने अथवा अनुवाद सहित पढ़ने वालों—दोनों के लिए यह पुस्तक बहुत उपयोगी है।

पृष्ठ सं. ४८८ मूल्यः रु. १०१.०० डाक व्यय अलग

# ॥ मंत्र रामायण ॥

मनुष्य को सफलता में विपत्तियां सहायक होती हैं। अधिकांश लोग इनसे भयभीत हो जाते हैं। यह उनकी मानसिक दुर्बलता का परिचायक है। विपत्तियों से टक्कर लेने के लिए सबल मानसिक शक्ति की आवश्यकता है। इसका सशक्त उपाय मंत्र शक्ति है।

सन्त शिरोमणि गोस्वामी तुलसीदास जी ने जनकल्याण के लिए रामचरितमानस की रचना की जिसके दोहे-चौपाई मंत्रों का कार्य करते हैं।

ऐसे ही कुछ मंत्रों का संग्रह मंत्र रामायण नामक पुस्तक में भक्तप्रिय पारसनाथ जी ने किया है। इन मंत्रों का रामायण के साथ सम्पुट लगाकर पाठ करने से हर मनोकामना अवश्य पूरी होती है। आप भी लाभ उठाइये। तृतीय संशोधित एवं परिवर्धित संस्करण।

● प्रकाशक ●

**नाथ पुस्तक भंडार**

१९४–दरीबा कलां, दिल्ली-११०००६